# प्रथमोऽध्यायः

उपोद्घातः

नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

स भगवान् सृष्ट्वेदं जगत् । तस्य च स्थितिं चिकीर्षुः मरीड्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यान् च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । जगतः स्थितिकारणम् । प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानः । दीर्घेण कालेन अनुष्ठातॄणां कामोद्भवाद्धीयमानविवेकज्ञानहेतुकेन
अधर्मेण अभिभूयमाने धर्मे, प्रवर्धमाने च अधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य चाभिरक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्, स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नाय उपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध
।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसङ्ग्रहभूतं दुर्विज्ञयार्थं तदर्थाविष्करणाय अनेकैर्विवृतपदपदार्थवाक्यवाक्यार्थन्यायमपि अत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

तस्य अस्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्य अत्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथा इममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम् । स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने [म.भा. १४.१६.१२] इत्यनुगीतासु । तत्रैव चोक्तं नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी [म.भा. १४.१९.७], यः स्यादेकायने लीनस्तूष्णीं किंचिदचिन्तयन् [म.भा. १४.१९.१], ज्ञानं संन्यासलक्षणम् [म.भा. १४.४३.२६] इति च । इहापि चान्ते उक्तमर्जुनाय सर्वधर्मान् परित्यज्य मामेकं शरणं
व्रज [गीता १८.६६] इति ।

अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णानाश्रमांश्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्, ईश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः । शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा चेममेवार्थमभिसन्धाय वक्ष्यति ब्रह्मण्याधाय कर्माणि [गीता ५.१०], योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये [गीता ५.११] इति ।

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनम् । परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतः अभिव्यञ्जयद्विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रम् । यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिः । अतः तद्विवरणे यत्नः क्रियते मया ॥

भगवद्गीता १

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥१.१॥

संजय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥१.२॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥१.३॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥१.४॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥१.५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥१.६॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥१.७॥
भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥१.८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥१.९॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१.१०॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥१.११॥
तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१.१२॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१.१३॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१.१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१.१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१.१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१.१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक्पृथक् ॥१.१८॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१.१९॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥१.२०॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥१.२१॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥१.२२॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥१.२३॥
एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥१.२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥१.२५॥
तत्रापश्यत्स्थितान् पार्थः पितॄनथ पितामहान् ।

आचार्यान्मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥१.२६॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥१.२७॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥१.२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥१.२९॥
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥१.३०॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥१.३१॥
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥१.३२॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥१.३३॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥१.३४॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥१.३५॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥१.३६॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥१.३७॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥१.३८॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥१.३९॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥१.४०॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥१.४१॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥१.४२॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥१.४३॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥१.४४॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥१.४५॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥१.४६॥
एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥१.४७॥

इति शङ्कराचार्यकृते गीताभाष्ये प्रथमोऽध्यायः
॥१॥

# द्वितीयोऽध्यायः

संजय उवाच
तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥२.१॥
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥२.२॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥२.३॥
कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥२.४॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥२.५॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्
तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥२.६॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥२.७॥

न हि प्रपश्यामि ममापनुद्याद्
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥२.८॥

संजय उवाच
एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥२.९॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥२.१०॥

अत्र च दृष्ट्वा तु पाण्डवानीकमित्यारभ्य यावत्न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजभूतदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः । तथा हि अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेषु अहमेतेषां ममैते इत्येवं भ्रान्तिप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तौ आत्मनः शोकमोहौ प्रदर्शितौ । कथं भीष्ममहं संख्ये इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादिकं
कर्तुं प्रववृते । तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा च भवति । तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखादिप्राप्तिलक्षणः संसारोऽनुपरतो भवति । इत्यतः संसारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानात्नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थमर्जुनं
निमित्तीकृत्य आह भगवान् वासुदेवः अशोच्यानित्यादि ।

अत्र केचिदाहुःसर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात्कैवल्यं न प्राप्यत एव । किं तर्हि ? अग्निहोत्रादिश्रौतस्मार्तकर्मसहितात्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति । ज्ञापकं चाहुरस्यार्थस्य
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि [गीता २.३३] कर्मण्येवाधिकारस्ते [गीता २.४७], कुरु कर्मैव तस्मात्त्वम् [गीता ४.१५] इत्यादि ।

हिंसादियुक्तत्वात्वैदिकं कर्म अधर्माय इतीयमप्याशङ्का न कार्या । कथम् ? क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तं क्रूरमपि स्वधर्म इति कृत्वा नाधर्माय । तदकरणे च ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि [गीता २.३३] इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवति इति ।

तदसत् । ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोः । अशोच्यानित्यादिना भगवता यावत्स्वधर्ममपि चावेक्ष्य इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतम्, तत्सांख्यम् । तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्ता आत्मेति प्रकरणार्थनिरूपणाद्या जायते, सा सांख्यबुद्धिः । सा येषां ज्ञानिनामुचिता भवति, ते सांख्याः । एतस्या बुद्धेर्जन्मनः प्राकात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणो योगः । तद्विषया बुद्धिः योगबुद्धिः । सा येषां कर्मिणामुचिता भवति ते योगिनः । तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति पुरा वेदात्मना मया प्रोक्ता इति । तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां वक्ष्यति कर्मयोगेन योगिनामिति । एवं सांख्यबुद्धिं योगबुद्धिं च आश्रित्य द्वे निष्ठे विभक्ते भगवतैव उक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोः
युगपदेकपुरुषाश्रयत्वासंभवं पश्यता । यथा एतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति [बृहदारण्यकोपनिषद् ४.४.२२] इति सर्वकर्मसंन्यासं विधाय तच्छेषेण किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः [बृहदारण्यकोपनिषद् ४.४.२२] इति । तत्रैव च प्राग्दारपरिग्रहात्पुरुष आत्मो प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनम् । पुत्रं, द्विप्रकारं च वित्तं मानुषं द्विप्रकारं च । तत्र मानुषं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां
च दैवं वित्तं देवलोकप्राप्तिसाधनम् । सोऽकामयत [बृहदारण्यकोपनिषद् १.४.१७] इति अविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि । तेभ्यो व्युत्थाय, प्रव्रजन्ति [बृहदारण्यकोपनिषद् ४.४.२२] इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः ।

न चार्जुनस्य प्रश्न उपपन्नो भवति ज्यायसी चेत्कर्मणस्ते [गीता ३.१] इत्यादिः । एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोः भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धा च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिः इति ।

किं च यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यातर्जुनस्यापि स उक्त एवेति, यच्छ्राय एतयोरेकं तन्मे ब्रूहि सुनिश्चितमिति कथमुभयोरुपदेशे सति अन्यतरविषय एव प्रश्नः स्यात्? न हि पित्तप्रशमनार्थिनः वैद्येन मधुरं शीतलं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहि इति प्रश्नः संभवति ।

अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयम् मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसि इति । न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठा मया पुरा प्रोक्ता इति वक्तुं युक्तम् ।

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चये अभिप्रेते विभागवचनादि सर्वमुपपननम् । किं च क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतः तत्किं कर्मणि घोरो मां नियोजयसि इत्युपालम्भोऽनुपपन्नः ।

तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः । यस्य त्वज्ञानात्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्म अकर्तृ च इति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तिः, तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात् । यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये, तद्वत्तत्फलाभिसंध्यहंकाराभावस्य
तुल्यत्वाद्विदुषः । तत्त्वविन्नाहं करोमीति मन्यते, न च तत्फलमभिसन्धत्ते । यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकर्मलक्षणधर्मानुष्ठानाय आहिताग्नेः काम्ये एव अग्निहोत्रादौ प्रवृत्तस्य सामि कृते विनष्टाऽपि कामे तदेव अग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति । तथा च दर्शयति भगवान् कुर्वन्नपि न लिप्यते न करोति न लिप्यते इति तत्र तत्र ॥

यच्च पूर्वैः पूर्वतरं कृतं कर्मणैव हि संसिद्धिमास्थिता जनकादयः इति, तत्तु प्रविभज्य विज्ञेयम् । तत्कथम् ? यदि तावत्पूर्वे जनकादयः तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युः, ते लोकसंग्रहार्थं गुणा गुणेषु वर्तन्ते इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिताः, न कर्मसंन्यासं कृतवन्त इत्यर्थः ।

अथ न ते तत्त्वविदः । ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिम्, ज्ञानोत्पत्तिलक्षणां वा संसिद्धिम्, आस्थिता जनकादय इति व्याख्येयम् । एतमेवार्थं वक्ष्यति भगवान् सत्त्वशुद्धये कर्म कुर्वन्ति इति । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः इत्युक्त्वा सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां वक्ष्यति सिद्धिं प्राप्तो यथा ब्रह्म इत्यादिना ॥

तस्माद्गीताशास्त्रे केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितातिति निश्चितोऽर्थः । यथा चायमर्थः, तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः ॥

तत्रैव धर्मसंमूढचेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्नस्य अर्जुनस्य अन्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान् वासुदेवः ततः कृपया अर्जुनमुद्दिधारयिषुः आत्मज्ञानायावतारयन्नाह

श्रीभगवानुवाच
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥२.११॥

न शोच्या अशोच्याः भीष्मद्रोणादयः । सद्वृत्तत्वात्परमार्थस्वरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तम्, अहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिना इति । त्वं प्रज्ञावादान् प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतत्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयसि उन्मत्त इव इत्यभिप्रायः । यस्मात्गतासून् गतप्राणान्मृतान्, अगतासूनगतप्राणान् जीवतश्च नानुशोचन्ति पण्डिताः आत्मज्ञाः । पण्डा आत्मविषया बुद्धिर्येषां ते हि पण्डिताः, पाण्डित्यं निर्विद्य [बृहदारण्यकोपनिषद् ३.५.१] इति श्रुतेः । परमार्थतस्तु तान्नित्यानशोच्याननुशोचसि, अतो मूढोऽसि इत्यभिप्रायः ॥२.११॥

कुतस्ते अशोच्याः ? यतो नित्याः । कथम् ?

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥२.१२॥

न त्वेव जातु कदाचिदहं नासं किन्त्वासमेव । अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्य एव अहमासमित्यभिप्रायः । तथा न त्वं नासीः, किन्त्वासीरेव । तथा नेमे जनाधिपा आसन् किन्त्वासन्नेव । तथा न चैव न भविष्यामः, किन्तु भविष्याम एव, सर्वे वयमतोऽस्माद्देहविनाशात्परमुत्तरकालेऽपि । त्रिष्वपि कालेषु नित्या आत्मस्वरूपेण इत्यर्थः । देहाभेदानुवृत्त्या बहुवचनम्, नात्मभेदाभिप्रायेण ॥२.१२॥

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥२.१३॥

देहोऽस्य अस्तीति देही, तस्य देहिनो देहवतः आत्मनोऽस्मिन् वर्तमाने देहा यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था, यौवनं यूनो भावो मध्यमावस्था, जरा वयोहानिः जीर्णावस्था, इत्येताः तिस्रोऽवस्थाः अन्योन्यविलक्षणाः । तासां प्रथमावस्थानाशे न नाशः, द्वितीयावस्थोपजने न उपजन आत्मनः । किं तर्हि ?अविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिः आत्मनो दृष्टा । तथा तद्वदेव देहादन्यो देहो देहान्तरम्, तस्य प्राप्तिः देहान्तरप्राप्तिः अविक्रियस्यैव आत्मन इत्यर्थः । धीरो धीमान् तत्रैवं सति न मुह्यति न मोहमापद्यते ॥२.१३॥

यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मा इति विजानतः, तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते, सुखवियोगनिमित्तो मोहो दुःखसंयोगनिमित्त च शोकः । इत्येतदर्जुनस्य वचनमाशङ्कय भगवानाह

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥२.१४॥

मात्रा आभिः मीयन्ते शब्दादय इति श्रोत्रादीनि इन्द्रियाणि । मात्राणां स्पर्शाः शब्दादिभिः संयोगाः । ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शा विषयाः शब्दादयः । मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः । शीतं कदाचित्सुखं कदाचित्दुःखम् । तथा उष्णमपि अनियतस्वरूपम् । सुखदुःखे पुनः नियतरूपे यतो न व्यभिचरतः । अतस्ताभ्यां पृथक्शीतोष्णयोः ग्रहणम् । यस्मात्ते मात्रास्पर्शादयः

आगमापायिनः आगमापायशीलाः तस्मातनित्याः । अतः तान् शीतोष्णादीन् तितिक्षस्व प्रसहस्व । तेषु हर्षं विषादं वा मा कार्षीः इत्यर्थः ॥२.१४॥

शीतोष्णादीन् सहतः किं स्यादिति शृणु

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥२.१५॥

यं हि पुरुषं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनातेते यथोक्ताः शीतोष्णादयः, स नित्यात्मस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुः अमृतत्वाय अमृतभावाय मोक्षायेत्यर्थः कल्पते समर्थो भवति ॥२.१५॥

इतश्च शोकमोहौ अकृत्वा शीतोष्णादिसहनं युक्तम्, यस्मात्

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥२.१६॥

न असतो ऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता ॥
न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु सम्भवति । विकारो हि सः, विकारश्च व्यभिचरति । यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत् । तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसत् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः । कार्यस्य घटादेः मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् ॥

तदसत्त्वे सर्वाभावप्रसङ्ग इति चेत्, न । सर्वत्र बुद्धिद्वयोपलब्धेः, सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभिचरति, तत्सत् । यद्विषया व्यभिचरति, तदसत् । इति सदसद्विभागे बुद्धितन्त्रे स्थिते । सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत्, सन् घटः सन् पटः, सन् हस्ती इति । एवं सर्वत्र । तयोर्बुद्ध्योः घटादिबुद्धिर्व्यभिचरति । तथा च दर्शितम् । न तु सद्बुद्धिः । तस्मात्घटादिबुद्धिविषयोऽसन्, व्यभिचारात् । न तु सद्बुद्धिविषयः, अव्यभिचारात् ॥
घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत्न । पटादेवपि सद्बुद्धिदर्शनात् । विशेषणविषयैव सा सद्बुद्धिः ।

सद्बुद्धिवत्घटबुद्धिरपि घटान्तरा दृश्यत इति चेत्, न । पटादौ अदर्शनात् ॥

सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत्, न । विशेष्याभावात् । सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्? न तु पुनः सद्बुद्धेः विषयाभावात् ॥

एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत्, न । इदमुदकमिति मरीच्यादौ अन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् ॥

तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्य असतो न विद्यते भाव इति । तथा सतश्च आत्मनोऽभावोऽविद्यमानता न विद्यते, सर्वत्राव्यभिचारातित्यवोचाम ॥

एवमात्मानात्मनोः सदसतोः उभयोरपि दृष्टः उपलब्धोऽन्तो निर्णयः सत्सदेव, असतसदेवेति, त्वनयोः यथोक्तयोः तत्त्वदर्शिभिः । तदिति सर्वनाम सर्वं च ब्रह्म, तस्य नाम तदिति, तद्भावस्तत्त्वम्, ब्रह्मणो याथात्म्यम् । तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनः, तैस्तत्त्वदर्शिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वन्द्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासते इति मनसि निश्चित्य तितिक्षस्व इत्यभिप्रायः ॥२.१६॥

किं पुनस्तत्यत्सदेव सर्वदैव अस्तीति । उच्यते

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।

विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥२.१७॥

अविनाशि न विनष्टुं शीलं यस्येति । तुशब्दोऽसतो विशेषणार्थः । तत्विद्धि विजानीहि । किम् ? येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशम्, आकाशेनैव घटादयः । विनाशमदर्शनमभावम् । अव्ययस्य न व्येति उपचयापचयौ न याति इति अव्ययं तस्य अव्ययस्य । नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति, निरवयवत्वात्, देहादिवत् । नाप्यात्मीयेन, आत्मीयाभावात् । यथा देवदत्तो धनहान्या व्येति, न तु एवं ब्रह्म व्येति । अतोऽव्ययस्य अस्य ब्रह्मणः विनाशं न कश्चित्कर्तुमर्हति, न कश्चितत्मानं विनाशयितुं शक्नोति ईश्वरोऽपि । आत्मा हि ब्रह्म, स्वात्मनि च क्रियाविरोधात् ॥२.१७॥

किं पुनस्तदसत्यत्स्वात्मसत्तां व्यभिचरतीति, उच्यते

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥२.१८॥

अन्तः विनाशः विद्यते येषां ते अन्तवन्तः । यथा मृगतृष्णिकादौ सद्बुद्धिः अनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते, स तस्य अन्तः । तथा इमे देहाः स्वप्नमायादेहादिवच अन्तवन्तः नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयर्य आत्मनोऽन्तवन्त इति उक्ताः विवेकिभिरित्यर्थः । नित्यस्य अनाशिनः इति न पुनरुक्तम् । नित्यत्वस्य द्विविधत्वात्लोका, नाशस्य च । यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते । विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्र नित्यस्य ठनाशिनः इति द्विविधेनापि नाशेन असंबन्धोऽस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यात्
आत्मनः । तत्मा भूदिति नित्यस्य अनाशिनः इत्याह । अप्रमेयम्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैः अपरिच्छाद्यस्येत्यर्थः ॥

ननु आगमेन आत्मा परिच्छिद्यते, प्रत्यक्षादिना च पूर्वम् । न । आत्मनः स्वतःसिद्धत्वात् । सिरा हि आत्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वमित्थमहमिति आत्मानमप्रमाय प चात्प्रमेयपरिच्छादाय प्रवर्तते । न हि आत्मा नाम कस्यचितप्रसिद्धो भवति । शास्त्रं तु अन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मनः प्रतिपद्यते, न ह्यज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः [बृहदारण्यकोपनिषद् ३.४.१] इति । यस्मादेवं नित्योऽविक्रियश्चात्मा तस्माद्युध्यस्व, युद्धादुपरमं मा कार्षीः इत्यर्थः ।

न ह्यत्र युद्धकर्तव्यता विधीयते, युद्धे प्रवृत्त एव हि असौ शोकमोहप्रतिबद्धः तूष्णीमास्ते । अतः तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्माद्युध्यस्व इति अनुवादमात्रम्, न विधिः ॥२.१८॥

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रम्, न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचौ आनिनाय भगवान् । यत्तु मन्यसे युद्धा भीष्मादयो मया हन्यन्ते अहमेव तेषां हन्ता इति, एषा बुद्धिर्मृषैव ते । कथम् ?

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥२.१९॥

य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्तारं य च एनमन्यो मन्यते हतं देहहननेन हतोऽहमिति हननक्रियायाः कर्मभूतम् । तौ उभौ न विजानीतः न ज्ञातवन्तौ अविवेकेन आत्मानम् । हन्ता अहं, हतोऽस्म्यहमिति देहहननेन आत्मानमहं प्रत्ययविषयं यौ विजानीतः तौ आत्मस्वरूपानभिज्ञौ इत्यर्थः । यस्मात्न अयमत्मा हन्ति न हननक्रियायाः कर्ता भवति, न च हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥ २.१९॥

कथमविक्रिय आत्मेति द्वितीयो मन्त्रः

न जायते म्रियते वा कदाचिन्

नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥२.२०॥

न जायते नोत्पद्यते, जनिलक्षणा वस्तुविक्रिया न आत्मनो विद्यते इत्यर्थः । तथा न म्रियते वा । वाशब्दः चार्थे । न म्रियते च इति अन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचित्जायते, न कदाचित्म्रियते, इत्येवम् । यस्मातयमात्मा भूत्वा भवनक्रियामनुभूय पश्चातभविता अभावं गन्ता न भूयः पुनः, तस्मात्न म्रियते । यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोका । वाशब्दात्नशब्दाच्च अयमात्मा अभूत्वा वा भविता देहवत्न भूयः । तस्मात्न जायते । यो हि अभूत्वा भविता स जायत इत्युच्यते । नैवमात्मा । अतो न जायते । यस्मादेवं तस्मातजः, यस्मात्न म्रियते तस्मात्नित्यश्च ।

यद्यपि आद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति, तथापि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव प्रतिषेधः कर्तव्योऽनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यातित्याह शाश्वत इत्यादिना । शाश्वत इति अपक्षयलक्षणा विक्रिया प्रतिषिध्यते । शश्वद्भवः शाश्वतः । न अपक्षीयते स्वरूपेण, निरवयवत्वात् । नापि गुणक्षयेण अपक्षयः, निर्गुणत्वात् । अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति । यो हि अवयवागमेन उपचीयते स वर्धते अभिनव इति च उच्यते । अयं तु आत्मा निरवयवत्वात्पुरापि
नव एवेति पुराणः न वर्धते इत्यर्थः । तथा न हन्यते । हन्तिः अत्र विपरिणामार्थे द्रष्टव्योऽपुनरुक्ततायै । न विपरिणम्यते इत्यर्थः ।

हन्यमाने विपरिणम्यमानेऽपि शरीराः । अस्मिन्मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मा इति वाक्यार्थः । यस्मादेवं तस्मातुभौ तौ न विजानीतः इति पूर्वेण मन्त्रेण अस्य संबन्धः ॥२.२०॥

य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवति इति प्रतिज्ञाय, न जायते इत्यनेन अविक्रियत्वं हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२.२१॥

वेद विजानाति अविनाशिनमन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेद इति संबन्धः । एनं पूर्वेण मत्रेणोक्तलक्षणमजं जन्मरहितमव्ययमपक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषोऽधिकृतः हन्ति हननक्रियां करोति, कथं वा घातयति हन्तारं प्रयोजयति । न कथंचित्कंचिथन्ति, न कथंचित्कंचित्घातयति इति उभयत्र आक्षेपः एवार्थः प्रश्नार्थासंभवात् । हेत्वर्थस्य च अविक्रियत्वस्य तुल्यत्वात्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवता । हन्तेस्
तु आक्षेपः उदाहरणार्थत्वेन कथितः । विदुषः कं कर्मासंभवे हेतुविशेषं पश्यन् कर्माण्याक्षिपति भगवान् कथं स पुरुषः इति ।

ननु उक्त एवात्मनोऽविक्रियत्वं सर्वकर्मासंभवकारणविशेषः । सत्यमुक्तः । न तु स कारणविशेषः, अन्यत्वात्विदुषोऽविक्रियादात्मनः । न हि अविक्रियं स्थाणुं विदितवतः कर्म न संभवति इति चेत्, न । विदुषः आत्मत्वात् । न देहादिसंघातस्य विद्वत्ता । अतः पारिशेष्यातसंहत आत्मा विद्वानविक्रियः इति तस्य विदुषः कर्मासंभवाताक्षेपो युक्तः कथं स पुरुषः इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्त्यविवेकविज्ञानेन अविद्यया उपलब्धा आत्मा कल्प्यते,
एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्या असत्यरूपयैव परमार्थतोऽविक्रिय एव आत्मा विद्वानुच्यते । विदुषः कर्मासंभववचनात्यानि कर्माणि शास्त्रेण विधीयन्ते तानि अविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते ॥

ननु विद्यापि अविदुष एव विधीयते, विदितविद्यस्य पिष्टपेषणवत्विद्याविधानानर्थक्यात् । तत्र अविदुषः कर्माणि विधीयन्ते न विदुषः इति विशेषो नोपपद्यते इति चेत्, न । अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्म अनेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्ता अहम्, मम कर्तव्यमित्येवं प्रकारविज्ञानवतोऽविदुषः यथा अनुष्ठेयं भवति, न तु तथा न जायते इत्याद्यात्मस्वरुपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति । किन्तु नाहं कर्ता, नाहं भोक्ता इत्याद्य्
आत्मैकत्वाकर्तृत्वादिविषयज्ञानात्नान्यदुत्पद्यते इति एष विशेष उपपद्यते । यः पुनः कर्ता अहमिति वेत्ति आत्मानम्, तस्य मम इदं कर्तव्यमिति अवश्यंभाविनी बुद्धिः स्यात् । तदपेक्षया सोऽधिक्रियते इति तं प्रति कर्माणि संभवन्ति । स च अविद्वानुभौ तौ न विजानीतः इति वचनात्विशेषितस्य च विदुषः कर्माक्षेपवचनात्कथं स पुरुषः इति ।

तस्मात्विशेषितस्य अविक्रियात्मदर्शिनः विदुषः मुमुक्षो च सर्वकर्मसंन्यासे एव अधिकारः । अत एव भगवान्नारायणः सांख्यान् विदुषोऽविदुष च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयतिज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति । तथा च पुत्राय आह भगवान् व्यासः द्वाविमावथ पन्थानौ [ाशा २४१.६] इत्यादि । तथा च क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्च इति । एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान् अतत्त्ववितहंकारविमूढात्मा कर्ताहमिति मन्यते, तत्त्ववित्तु, नाहं करोमि इति । तथा च सर्वकर्माणि मनसा संन्यस्यास्ते
इत्यादि ॥

तत्र केचित्पण्डितंमन्या वदन्ति जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्ता एकोऽहमात्मा इति न कस्यचित्ज्ञानमुत्पद्यते, यस्मिन् सति सर्वकर्मसंन्यासः उपदिश्यते इति । तन्न । न जायते इत्यादि शास्त्रोपदेशानर्थक्यप्रसङ्गात् । यथा च शास्त्रोपदेशसामर्थ्यात्धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धविज्ञानमुत्पद्यते, तथा शास्त्रात्तस्यैव आत्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मात्नोत्पद्यते इति प्रष्टव्याः ते । करणागोचरत्वातिति चेत्, न । मनसैवानुद्रष्टव्यम् [बृहदारण्यकोपनिषद् ४.४.१९] इति श्रुतेः । शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम् । तथा च तदधिगमाय अनुमाने आगमे च सति ज्ञानं नोत्पद्यत इति साहसमात्रमेतत् । ज्ञानं
च उत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधते इत्यभ्युपगन्तव्यम् । तच्च अज्ञानं दर्शितं हन्ता अहम्, हतोऽस्मि इति उभौ तौ न विजानीत इति । अत्र च आत्मनः हननक्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वं च अज्ञानकृतं दर्शितम् । तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेः अविद्याकृतत्वमविक्रियत्वातात्मनः । विक्रियावान् हि कर्ता आत्मनः कर्मभूतमन्यं प्रयोजयति कुरु इति ।

तदेततविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् वासुदेवो विदुषः कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिनं, कथं स पुरुषः इत्यादिना । क्व पुनः विदुषोऽधिकार इति एतदुक्तं पूर्वमेव ज्ञानयोगेन सांख्यानामिति । तथा च सर्वकर्मसंन्यासं वक्ष्यति सर्वकर्माणि मनसा इत्यादिना ॥

ननु मनसा इति वचनात्न वाचिकानां कायिकाना च संन्यासः इति चेत्, न । सर्वकर्माणि इति विशेषितत्वात् । मानसानामेव सर्वकर्मणामिति चेत्, न । मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वा अन्यानि सर्वकर्माणि मनसा संन्यस्येदिति चेत्, न । नैव कुर्वन्न कारयनिति विशेषणात् । सर्वकर्मसंन्यासोऽयं भगवता उक्तः मरिष्यतो न जीवत इति चेत्, न । नवद्वारे पुरे देही आस्ते इति विशेणानुपपत्तेः । न हि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति ।

अकुर्वतोऽकारयत च देहे संन्यस्य इति संबन्धो न देहे आस्ते इति चेत्, न । सर्वत्र आत्मनोऽविक्रियत्वावधारणात् । आसनक्रियायाश्चाधिकरणापेक्षत्वात् । तदनपेक्षत्वाच्च संन्यासस्य । संपूर्वस्तु न्यासशब्दोऽत्र त्यागार्थः, न निक्षेपार्थः । तस्मात्गीताशास्त्रे आत्मज्ञानवतः संन्यास एव अधिकारो न कर्मणीति तत्र तत्र उपरिष्टातात्मज्ञानप्रकरणे दर्शयिष्यामः ॥२.२१॥

प्रकृतं तु वक्ष्यामः । तत्र आत्मनोऽविनाशित्वं प्रतिज्ञातम् । तत्किमिवेति, उच्यते

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णानि
अन्यानि संयाति नवानि देही ॥२.२२॥

वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवानि अभिनवानि गृह्णाति उपादत्ते नरः पुरुषोऽपराणि अन्यानि, तथा तद्वदेव शरीराणि विहाय जीर्णानि अन्यानि संयाति संगच्छति नवानि देही आत्मा पुरुषवतविक्रिय एवेत्यर्थः ॥२.२२॥

कस्मातविक्रिय एवेति, आह

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२.२३॥

एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि, निरवयवत्वात्नावयवविभागं कुर्वन्ति । शस्त्राणि अस्यादीनि । तथा नैनं दहति पावकः, अग्निरपि न

भस्मीकरोति । तथा न चैनं क्लेदयन्ति आपः । अपां हि सावयवस्य वस्तुन आद्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यम् । तन्न निरवयवे आत्मनि संभवति । तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुः । एनं त्वात्मानं न शोषयति मारुतोऽपि ॥२.२३॥

यत एवं तस्मात्

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२.२४॥

यस्मातन्योन्यनाशहेतुभूतानि एनमात्मानं नाशयितुं नोत्सहन्ते अस्यादीनि तस्मात्नित्यः । नित्यत्वात्सर्वगतः । सर्वगतत्वात्स्थाणुरिव, स्थिर इत्येतत् । स्थिरत्वातचलोऽयमात्मा । अतः सनातनश्चिरन्तनः, न कारणात्कुतश्चिन्निष्पन्नः, अभिनव इत्यर्थः ।

नैतेषां लोकानां पौनरुक्त्यं चोदनीयम्, यतः एकेनैव लोकानात्मनः नित्यत्वमविक्रियत्वं चोक्तं न जायते म्रियते वा इत्यादिना । तत्र यदेव आत्मविषयं किंचिदुच्यते, तदेतस्मात्लोकार्थान्नातिरिच्यते । किंचिच्छब्दतः पुनरुक्तम्, किंचिदर्थतः इति । दुर्बोधत्वातात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वासुदेवः कथं नु नाम संसारिणामसंसारित्वबुद्धिगोचरतामापन्नं सतव्यक्तं तत्त्वं संसारनिवृत्तये स्यातिति ॥२.२४॥

किं च

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२.२५॥

अव्यक्तः सर्वकरणाविषयत्वात्न व्यज्यत इति अव्यक्तोऽयमात्मा । अतएव अचिन्त्योऽयम् । यद्धि इन्द्रियगोचरस्तच्चिन्ताविषयत्वमापद्यते । अयं त्वात्मा अनिन्द्रियगोचरत्वातचिन्त्यः । अतएव अविकार्यः, यथा क्षीरं दध्यातञ्चनादिना विकारि न तथा अयमात्मा । निरवयवत्वाच्चाविक्रियः । न हि निरवयवं किंचित्विक्रियात्मकं दृष्टाम् । अविक्रियत्वातविकार्योऽयमात्मा उच्यते । तस्मातेवं यथोक्तप्रकारेण एनमात्मानं विदित्वा त्वं न अनुशोचितुमर्हसि हन्ताहमेषाम्, मयैते हन्यन्त इति ॥२.२५॥

आत्मनोऽनित्यत्वमभ्युपगम्य इदमुच्यते

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२.२६॥

अथ च इति अभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्धया प्रत्यनेकशरीरोत्पत्ति जातो जात इति मन्यसे । तथा प्रतितत्तद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति । तथापि तथाभावेऽप्यात्मनि त्वं महाबाहो, न एवं शोचितुमर्हसि, जन्मवतो नाशो नाशवतो जन्म चेत्येताववश्यंभाविनाविति ॥२.२६॥

तथा च सति

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२.२७॥

जातस्य हि लब्धजन्मनः ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुव जन्म मृतस्य च । तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थः । तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२.२७॥

कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुम्, यतः

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२.२८॥

अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिः आदिर्येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तानि अव्यक्तदीनि भूतानि प्रागुत्पत्तेः, उत्पन्नानि च प्राङ्मरणात्व्यक्तमध्यानि । अव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तानि अव्यक्तनिधनानि । मरणादूर्ध्वमप्यव्यक्तताामेव प्रतिपद्यन्ते इत्यर्थः । तथा चोक्तम्

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नासौ तव न तस्य त्वं वृथा का परिदेवना ॥ [ंहा. ष्त्री. २.१३] इति ।

तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥२.२८॥

दुर्विज्ञेयोऽथं प्रकृत आत्मा । किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते । कथं दुर्विज्ञेयोऽयमात्मा इत्यत आह

आश्चर्यवत्पश्यति कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२.२९॥

आश्चर्यवताश्चर्यमदृष्टपूर्वमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवताश्चर्यमिव एनमात्मानं पश्यति कश्चित् । आश्चर्यवदेनं वदति तथैव चान्यः । आश्चर्यवच्च एनमन्यः सृणोति । श्रुत्वा दृष्ट्वा उक्त्वापि एनमात्मानं वेद न चैव कश्चित् । अथवा योऽयमात्मानं पश्यति स आश्चर्यतुल्यः, यो वदति य च सृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति । अतो दुर्बोध आत्मा इत्यभिप्रायः ॥२.२९॥

अथेदानीं प्रकरणार्थमुपसंहरन् ब्रूते

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥२.३०॥

देही शरीरी नित्यं सर्वदा सर्वावस्थासु अवध्यः निरवयवत्वान्नित्यत्वाच्च । तत्र अवध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात्स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्, तस्माद्भीष्मादीनि सर्वाणि भूतानि उद्दिश्य न त्वं शोचितुमर्हसि ॥२.३०॥

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न संभवतीत्युक्तम् । न केवलं परमार्थतत्त्वापेक्षायामेव, किं तु

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥२.३१॥

स्वधर्ममपि स्वो धर्मः क्षत्रियस्य युद्धं तमपि अवेक्ष्य त्वं न विकम्पितुं प्रचलितुं नार्हसि क्षत्रियस्य स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः । तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यम् । तस्माद्धर्म्याद्युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते हि यस्मात् ॥२.३१॥

कुतश्च तत्युद्धं कर्तव्यमिति, उच्यते

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥२.३२॥

यदृच्छया च अप्रार्थिततया उपपन्नमागतं स्वर्गद्वारमपावृतमुद्घाटितं य एतदीदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ, किं न सुखिनस्ते ? ॥२.३२॥

एतं कर्तव्यताप्राप्तमपि

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥२.३३॥

अथ चेत्त्वमिमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत्, ततः तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥२.३३॥

न केवलं स्वधर्मकीर्तिपरित्यागः

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥२.३४॥

अकीर्तिं चापि युद्धा भूतानि कथयिष्यन्ति ते तव अव्ययां दीर्घकालाम् । धर्मात्मा शूर इत्येवमादिभिः गुणैः संभावितस्य च अकीर्तिः मरणाततिरिच्यते, संभावितस्य च अकीर्तेः वरं मरणमित्यर्थः ॥२.३४॥

किं च

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥२.३५॥

भयात्कर्णादिभ्यः रणात्युद्धातुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथाः दुर्योधनप्रभृतयः । येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्तः इत्येवं मतः बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावम् ॥२.३५॥

किं च

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥२.३६॥

अवाच्यवादानवक्तव्यवादांश्च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवः निन्दन्तः कुत्सयन्तः तव त्वदीयं सामर्थ्यं

निवातकवचादियुद्धनिमित्तम् । ततस्तस्मात्निन्दाप्राप्तेर्दुःखात्दुःखतरं नु किम् ? ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥२.३६॥

युरा पुनः क्रियमाणे कर्णादिभिः

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥२.३७॥

हतो वा प्राप्स्यसि स्वर्गम्, हतः सन् स्वर्गं प्राप्स्यसि । जित्वा वा कर्णादीन् शूरान् भोक्ष्यसे महीम् । उभयथापि तव लाभ एवेत्यभिप्रायः । यत एवं तस्मातुत्तिष्ठ कौन्तेय युद्धाय कृतानि च यः जेष्यामि शत्रून्, मरिष्यामि वा इति निश्चयं कृत्वेत्यर्थः ॥२.३७॥

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं सृणु

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥२.३८॥

सुखदुःखे समे तुल्ये कृत्वा, रागद्वेषावप्यकृत्वेत्येतत् । तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटास्व । न एवं युद्धं कुर्वन् पापमवाप्स्यसि । इत्येष उपदेशः प्रासङ्गिकः ॥२.३८॥

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्य इत्याद्यैः लोकैरुक्तः, न तु तात्पर्येण । परमार्थदर्शनमिह प्रकृतम् । तच्चोक्तमुपसंह्रियते एषा तेऽभिहिता इति शास्त्रविषयविभागप्रदर्शनाय । इह हि प्रदर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात्ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते, श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्ति इत्यत आह

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥२.३९॥

एषा ते तुभ्यमभिहिता उक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षात्शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे चेमामनन्तरमेवोच्यमानां बुद्धिं शृणु । तां च बुद्धिं स्तौति प्ररोचनार्थम् बुद्ध्या यया योगविषयया युक्तः । हे पार्थ, कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥२.३९॥

किं चान्यत्

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥२.४०॥

नेह मोक्षमार्गे कर्मयोगे अभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति यथा कृष्यादेः । योगविषये प्रारम्भस्य न अनैकान्तिकफलत्वमित्यर्थः । किं च नापि चिकित्सावत्प्रत्यवायो विद्यते भवति । किं तु स्वल्पमपि अस्य धर्मस्य योगधर्मस्य अनुष्ठितं त्रायते रक्षति महतः भयात्संसारभयात्जन्ममरणादिलक्षणात् ॥२.४०॥

येयं सांख्ये बुद्धिरुक्ता योगे च, वक्ष्यमाणलक्षणा सा

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥२.४१॥

व्यवसायात्मिका निश्चयस्वभावा एका एव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य वाधिका, सम्यक्प्रमाणजनितत्वात्, इह श्रेयोमार्गे । हे कुरुनन्दन ! याः पुनरितरा विपरीतबुद्धयः, यासां शाखाभेदप्रचारवशातनन्तोऽपारोऽनुपरतः
संसारो नित्यप्रततो विस्तीर्णो भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्च उपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते ता बुद्धयो बहुशाखाः बह्व्वयः शाखाः यासां ताः बहुशाखाः, बहुभेदा इत्येतत् । प्रतिशाखाभेदेन ह्यनन्ता च बुद्धयः । केषाम् ? अव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः ॥२.४१॥

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥२.४२॥

यामिमां वक्ष्यमाणां पुष्पितां पुष्पित इव वृक्षः शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । के ? अविपश्चितोऽमेधसोऽविवेकिन इत्यर्थः । वेदवादरताः बह्व्यर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः हे पार्थ, न अन्यत्स्वर्गप्राप्त्यादिफलसाधनेभ्यः कर्मभ्योऽस्ति इत्येवं वादिनः वदनशीलाः ॥२.४२॥

ते च

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥२.४३॥

कामात्मानः कामस्वभावाः, कामपरा इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थः येषां ते स्वर्गपराः स्वर्गप्रधानाः । जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा, तां वाचम् । प्रवदन्ति इत्यनुषज्यते । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषाः ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्थाः यया वाचा बाहुल्येन प्रकाश्यन्ते । भोगैश्वर्यगतिं
प्रति भोगश्च ऐश्वर्यं च भोगैश्वर्ये, तयोर्गतिः प्राप्तिः भोगैश्वर्यगतिः, तां प्रति साधनभूताः ये क्रियाविशेषाः तद्बहुलां तां वाचं प्रवदन्तः मूढाः संसारे परिवर्तन्ते इत्यभिप्रायः ॥२.४३॥

तेषां च

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥२.४४॥

भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यः चैश्वर्यं च इति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानाम् । तया क्रियाविशेषबहुलया वाचा अपहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा बुद्धिः समाधौ समाधीयते अस्मिन् पुरुषोपभोगाय सर्वमिति समाधिः अन्तःकरणं बुद्धिः तस्मिन् समाधौ, न विधीयते न भवति इत्यर्थः ॥२.४४॥

य एवं विवेकबुद्धिरहिताः तेषां कामात्मनां यत्फलं तदाह

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥२.४५॥

त्रैगुण्यविषयाः त्रैगुण्यं संसारो विषयः प्रकाशयितव्यः येषां ते वेदाः त्रैगुण्यविषयाः । त्वं तु निस्त्रैगुण्यो भव अर्जुन, निष्कामो भव इत्यर्थः । निर्द्वन्द्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ । ततः निर्गतः निर्द्वन्द्वो भव । नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितो भव । तथा निर्योगक्षेमोऽनुपात्तस्य उपादानं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करा इत्यतः निर्योगक्षेमो भव । आत्मवानप्रमत्तश्च भव । एष तव उपदेशः स्वधर्ममनुतिष्ठतः ॥२.४५॥

सर्वेषु वेदोक्तेषु कर्मसु यान्युक्तान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्, किमर्थं तानि ईश्वरायेत्यनुष्ठीयन्ते इत्युच्यते । सृणु

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥२.४६॥

यथा लोके कूपतडागाद्यनेकस्मिनुदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतः संप्लुतोदकेऽपि योऽर्थः तावानेव संपद्यते, तत्र अन्तर्भवतीत्यर्थः । एवं तावान् तावत्परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थः यत्कर्मफलं सोऽर्थः ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतः योऽर्थः यत्विज्ञानफलं सर्वतः संप्लुतोदकस्थानीयं तस्मिन् तावानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः
। यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद [Cहाऊ ४.१.२] इति श्रुतेः । सर्वं कर्माखिलमिति च वक्ष्यति । तस्मात्प्राक्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥२.४६॥

तव च

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥२.४७॥

कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव । तत्र च कर्म कुर्वतः मा फलेषु अधिकारोऽस्तु, कर्मफलतृष्णा मा भूत्कदाचन कस्यांचिदप्यवस्थायामित्यर्थः । यदा कर्मफले तृष्णा ते स्यात्तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्मफलहेतुः भूः । यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत् । यदि कर्मफलं नेष्यते, किं कर्मणा दुःखरूपेण ? इति मा ते तव सङ्गोऽस्त्वकर्मणि अकरणे प्रीतिर्मा भूत् ॥२.४७॥

यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म, कथं तर्हि कर्तव्यमिति । उच्यते

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥२.४८॥

योगस्थः सन् कुरु कर्माणि केवलमीश्वरार्थम् । तत्रापीश्वरो मे तुष्यतु इति सङ्गं त्यक्त्वा धनंजय । फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः, तद्विपर्ययजा असिद्धिः, तयोः सिद्ध्यसिद्ध्योरपि समः तुल्यो भूत्वा कुरु कर्माणि । कोऽसौ योगो यत्रस्थः कुरु इत्युक्तम् ? इदमेव तत् सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥२.४८॥

यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मोक्तम्, एतस्मात्कर्मणः

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥२.४९॥

दूरेण अतिविप्रकर्षेण अत्यन्तमेव ह्यवरमधमं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात्समत्वबुद्धियुक्तात्कर्मणः, जन्ममरणादिहेतुत्वात् । हे धनंजय, यत एवं ततः योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व, परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः कृपणाः दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः, यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः [बृहदारण्यकोपनिषद् ३.८.१०] इति श्रुतेः
॥२.४९॥

समत्वबुद्धियुक्तः सन् स्वधर्ममनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥२.५०॥

बुद्धियुक्तः कर्मसमत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तः सः जहाति परित्यजति इह अस्मिन् लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतः, तस्मात्समत्वबुद्धियोगाय युज्यस्व घटास्व । योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः । तद्धि कौशलं यद्बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते । तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥२.५०॥

यस्मात्
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥२.५१॥

कर्मजं फलं त्यक्त्वा इति व्यवहितेन सम्बन्धः । इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्तः हि यस्मात्फलं त्यक्त्वा परित्यज्य मनीषिणः ज्ञानिनो भूत्वा, जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धः जन्मबन्धः तेन विनिर्मुक्ताः जीवन्त एव जन्मबन्धात्विनिर्मुक्ताः सन्तः, पदं परमं विष्णोः मोक्षाख्यं गच्छन्ति अनामयं सर्वोपद्रवरहितमित्यर्थः । अथवा बुद्धियोगाद्धनंजय इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धजनिता बुद्धिर्दर्शिता, साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥२.५१॥

योगानुष्ठानजनितसत्त्वशुद्धजा बुद्धिः कदा प्राप्स्यते इत्युच्यते

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥२.५२॥

यदा यस्मिन् काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येन आत्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते, तत्तव बुद्धिः व्यतितरिष्यति व्यतिक्रमिष्यति, अतिशुद्धभावमापात्स्यते इत्यर्थः । तदा तस्मिन् काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च, तदा श्रोतव्यं श्रुतं च ते निष्फलं प्रतिभातीत्यभिप्रायः ॥२.५२॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामीति चेत्, तत्सृणु

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यस्यि ॥२.५३॥

श्रुतिविप्रतिन्ना अनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ, समाधीयते चित्तमस्मिन्निति समाधिरात्मा, तस्मिनात्मनि इत्येतत् । अचला तत्रापि विकल्पवर्जिता इत्येतत् । बुद्धिरन्तःकरणम् । तदा तस्मिन् काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥२.५३॥

प्रश्नबीजं प्रतिलभ्य अर्जुन उवाचलब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया
अर्जुन उवाच

अर्जुन उवाच
स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥२.५४॥

स्थिता प्रतिष्ठिता अहमस्मि परं ब्रह्म इति प्रज्ञा यस्य सः स्थितप्रज्ञस्तस्य स्थितप्रज्ञस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्थस्य समाधौ स्थितस्य हे केशव । स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत । किमासीत व्रजेत किमासनं व्रजनं वा तस्य कथमित्यर्थः । स्थितप्रज्ञस्य लक्षणमनेन लोकेन पृच्छयते ॥२.५४॥

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः, यश्च कर्मयोगेन, तयोः प्रजहाति इत्यारभ्य आ अध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात् । यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि श्रीभगवानुवाच
प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥२.५५॥

प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन् काले सर्वान् समस्तान् कामानिच्छाभेदान् हे पार्थ, मनोगतान्मनसि प्रविष्टाअन् हृदि प्रविष्टान् । सर्वकामपरित्यागे तुष्टिकारणाभावात्शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता, इत्यत उच्यते आत्मन्येव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्टाः परमार्थदर्शनामृतरसलाभेन अन्यस्मादलंप्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वान् तदा उच्यते । त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडाः स्थितप्रज्ञ इत्यर्थः ॥२.५५॥

किं च

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥२.५६॥

दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयमनुद्विग्नमनाः । तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य, न अग्निरिव इन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः । वीतरागभयक्रोधः राग च भयं च क्रोध च वीता विगता यस्मात्स वीतरागभयक्रोधः । स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदा उच्यते ॥२.५६॥

किं च

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥२.५७॥

यः मुनिः सर्वत्र देहजीवितादिष्वपि अनभिस्नेहोऽभिस्नेहवर्जितस्तत्तत्प्राप्य शुभाशुभं तत्तत्शुभमशुभं वा लब्ध्वा नाभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं च प्राप्य न द्वेष्टि इत्यर्थः । तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥२.५७॥

किं च

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२.५८॥

यदा संहरते सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानि इव यथा कूर्मो भयात्स्वान्यङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते । तस्य प्रज्ञा प्रतिष्ठिता इत्युक्तार्थं वाक्यम् ॥२.५८॥

तत्र विषयाननाहरतः आतुरस्यापि इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः स कथं संह्रियते इत्युच्यते

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥२.५९॥

यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यस्तं वर्जयित्वा । रसशब्दो रागे प्रसिद्धः, स्वरसेन प्रवृत्तः रसिकः रसज्ञः, इत्यादिदर्शनात् । सोऽपि रसो रञ्जनरूपः सूक्ष्मोऽस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य अहमेव तदिति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः । नासति सम्यग्दर्शने रसस्य उच्छेदः
। तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥२.५९॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि, यस्मात्तदनवस्थापने दोषमाह

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥२.६०॥

यततः प्रयत्नं कुर्वतः हि यस्मात्कौन्तेय पुरुषस्य विपश्चितः मेधाविनोऽपि इति व्यवहितेन संबन्धः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः ॥२.६०॥

यतस्तस्मात्

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।

वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥२.६१॥

तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सनासीत मत्परोऽहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परः, नान्योऽहं तस्मातित्यासीत इत्यर्थः । एवमासीनस्य यतेर्वशे हि यस्येन्द्रियाणि वर्तन्ते अभ्यासबलात्तस्य प्रज्ञा प्रतिष्ठिता ॥२.६१॥

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥२.६२॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशादबुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥२.६३॥

ध्यायतश्चिन्तयतो विषयात्शब्दादीन् विषयविशेषानालोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिस्तेषु विषयेषु उपजायते उत्पद्यते । सङ्गात्प्रीतेः संजायते समुत्पद्यते कामस्तृष्णा । कामात्कुतश्चित्प्रतिहतात्क्रोधोऽभिजायते ।

क्रोधाद्भवति संमोहोऽविवेकः कार्याकार्यविषयः । क्रुद्धो हि संमूढः सन् गुरुमप्याक्रोशति । संमोहात्स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृते स्यात्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः । ततः स्मृतिभ्रंशात्बुद्धिनाशः बुद्धिनाशः । कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते । बुद्धेर्नाशात्प्रणश्यति । तावदेव हि पुरुषः यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यम् । तदयोग्यत्वे नष्ट एव पुरुषो भवति । अतः
तस्यान्तःकरणस्य बुद्धेर्नाशात्प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः ॥२.६२६३॥

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम् । अथ इदानीं मोक्षकारणमिदमुच्यते

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥२.६४॥

रागद्वेषवियुक्तै रागश्च द्वेषश्च रागद्वेषौ, तत्पुरःसरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिरिन्द्रियैर्विषयानवर्जनीयान् चरनुपलभमानः आत्मवश्यैरात्मनो वश्यानि वशीभूतानि इन्द्रियाणि तैरात्मवश्यैर्विधेयात्मा इच्छातः विधेय आत्मा अन्तःकरणं यस्य सोऽयं प्रसादमधिगच्छति । प्रसादः प्रसन्नता स्वास्थ्यम् ॥२.६४॥

प्रसादे सति किं स्यातित्युच्यते

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥२.६५॥

प्रसादे सर्वदुःखानामाध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते । किं च प्रसन्नचेतसः स्वस्थान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तातवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः ।
एवं प्रसन्नचेतसोऽवस्थितबुद्धिः कृतकृत्यता यतः, तस्मात्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेतिति वाक्यार्थः ॥ २.६५॥

सेयं प्रसन्नता स्तूयते

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥२.६६॥

नास्ति न विद्यते न भवतीत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य । न च अस्ति अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः । तथा न चास्त्यभावयत आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिरुपशमः । अशान्तस्य कुतः सुखम् ? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिर्या तत्सुखम्, न विषयविषया तृष्णा । दुःखमेव हि सा । न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यते इत्यर्थः ॥ २.६६॥

अयुक्तस्य कस्माद्बुद्धिर्नास्ति इत्युच्यते

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥२.६७॥

इन्द्रियाणां हि यस्मात्चरतां स्वस्वविषयेषु प्रवर्तमानानां यत्मनोऽनुविधीयते अनुप्रवर्तते ततिन्द्रियविषयविकल्पनेन प्रवृत्तं मनोऽस्य यतेः हरति प्रज्ञामात्मानात्मविवेकजां नाशयति । कथम् ? वायुः नावमिव अम्भसि उदके जिगमिषतां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति ॥२.६७॥

यततो हि इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा तं चार्थमुपपाद्य उपसंहरति

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२.६८॥

इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्तस्मात्यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२.६८॥

योऽयं लौकिको वैदिक च व्यवहारः स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वातविद्यानिवृत्तौ निवर्तते, अविद्याया च विद्याविरोधात्निवृत्तिः, इत्येतमर्थं स्फुटीकुर्वन्नाह

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥२.६९॥

या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात्सर्वभूतानां सर्वेषां भूतानाम् । किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः । यथा नक्तंचराणामहरेव सदन्येषां निशा भवति, तद्वत्नक्तंचरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम् । तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवान्, जितेन्द्रियो योगीत्यर्थः । यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इति उच्यन्ते, यस्यां
निशायां प्रसुप्ता इव स्वप्नदृशः, सा निशा अविद्यारूपत्वात्परमार्थतत्त्वं पश्यतो मुनेः ।

अतः कर्माणि अविद्यावस्थायामेव चोद्यन्ते, न विद्यावस्थायाम् । विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छति अविद्या । प्राक्विद्योत्पत्तेः अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते । न अप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः, प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म इति हि कर्मणि कर्ता प्रवर्तते, न अविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ । तथा च दर्शयिष्यति तद्बुद्धयस्तदात्मानः इत्यादिना ज्ञाननिष्ठायामेव तस्य अधिकारम् ।

तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिः इति चेत्, न । स्वात्मविषयत्वादात्मविज्ञानस्य । न ह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता, आत्मत्वादेव । तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य । न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं ह्यात्मनः निवर्तयति अन्त्यं प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात्प्रमाणस्य । तस्मान्नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥२.६९॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न तु असंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यनाह

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥२.७०॥

आपूर्यमाणमद्भिरचलप्रतिष्ठमचलतया प्रतिष्ठा अवस्थितिः यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत्कामाः विषयसंनिधावपि सर्वतः इच्छाविशेषाः यं पुरुषम् समुद्रमिव आपः अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, स शान्तिर्मोक्षमाप्नोति, नेतरः कामकामी, काम्यन्त इति कामाः विषयाः तान् कामयितुं शीलं यस्य सः कामकामी, नैव प्राप्नोतीत्यर्थः ॥२.७०॥

यस्मादेवं तस्मात्

विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥२.७१॥

विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वानशेषतः कात्स्न्र्येन चरति, जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः । निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निःस्पृहः सन्निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशवर्जितः, निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत् । स एवंभूतः स्थितप्रज्ञः ब्रह्मवित्शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति ब्रह्मभूतो भवति इत्यर्थः
॥२.७१॥

सैषा ज्ञाननिष्ठा स्तूयते

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥२.७२॥

एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानमित्येतत् । हे पार्थ, नैनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति । स्थित्वास्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति गच्छति । किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वाणमृच्छति इति ॥२.७२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे, साङ्ख्ये बुद्धिर्योगे बुद्धिरिति च । तत्र प्रजहाति यदा कामानित्यारभ्य आ अध्यायपरिसमाप्तेः साङ्ख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थता उक्ता एषा ब्राह्मी स्थितिः इति । अर्जुनाय च कर्मण्येवाधिकारस्ते, मा सङ्गोऽस्त्वकर्मणि इति कर्म एव कर्तव्यमुक्तवान् योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान् । तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच कथं भक्ताय श्रेयोऽर्थिने यत्साक्षात्श्रेयःसाधनं साङ्ख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणापि अनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य । तदनुरूपप्रश्नः ज्यायसी चेतित्यादिः । प्रश्नापाकरणवाक्यं च भगवता उक्तं यथोक्तविभागविषये शास्त्रे ।

केचित्तु अर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति । यथा च आत्मना सम्बन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति । कथं ? तत्र सम्बन्धग्रन्थे तावत्सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तम् । पुनः विशेषितं च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमिति ।

इह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः । तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत् । तत्रैतत्स्याद्गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति ।

एतदपि पूर्वोत्तरविरुद्धमेव । कथं, सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञाय इह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तराणाम् ।

अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानात्श्रौतकर्मरहिताद्गृहस्थानां मोक्षः प्रतिषिध्यते इति । तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलान्न मोक्ष इत्युच्यत इति । एतदपि विरुद्धम् । कथम् ? गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताद्ज्ञानान्मोक्षः प्रतिषिध्यते न तु आश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुम् ।

किं च, यदि मोक्षसाधनत्वेन स्मार्तानि कर्माणि ऊर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापि इष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः ।

अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षाय ऊर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मोक्ष इति । तत्रैवं सति गृहस्थस्यायासबाहुल्यं श्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरसि अरोपितं स्यात् ।

अथ गृहस्थस्यैवायासबाहुल्यकारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौतनित्यकर्मरहितत्वादिति । तदप्यसत् । सर्वोपनिषत्सु इतिहासपुराणयोगशास्त्रे च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः ।

सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः ? न, मुमुक्षोः सर्वकर्मसंन्यासविधानात् । व्युत्थायाथ भिक्षाचर्यं चरन्ति [बृहदारण्यकोपनिषद् ३.५.१], तस्मात्संन्यासमेषां तपसामतिरिक्तमाहुः [णाऊ २.७९], न्यास एवात्यरेचयेत्[णाऊ २.७८], इति । न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः [णाऊ २.१२] इति च । ब्रह्मचर्यादेव प्रव्रजेत्[ञावाऊ ४] इत्याद्याः श्रुतयः ।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।<br>
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥<br>
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।<br>
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥ इति बृहस्पतिरपि कचं प्रति ।

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।<br>
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ [म.भा. १२.२४१.७] इति शुकानुशासनम् ।

इहापि सर्वकर्माणि मनसा संन्यस्य इत्यादि । मोक्षस्य चाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् । नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानि इति चेत्, न । असंन्यासिविषयत्वात्प्रत्यवायप्राप्तेः । न हि अग्निकार्याद्यकरणात्संन्यासिनः प्रत्यवायः कल्पयितुं शक्यो यथा ब्रह्मचारिणामसंन्यासिनामपि कर्मिणाम् । न तवन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्य उत्पत्तिः कल्पयितुं शक्या कथमसतः सज्जायते [Cहाऊ ६.२.२] इति असतः सज्जन्मासम्भवश्रुतेः ।

यदि विहिताकरणादसम्भाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदा अनर्थकरो वेदः अप्रमाणमित्युक्तं स्यात् । विहितस्य करणाकरणयोः दुःखमात्रफलत्वात् । तथा च कारकं शास्त्रं न ज्ञापकमिति अनुपपन्नार्थं कल्पितं स्यात् । न चैतदिष्टम् । तस्मान्न संन्यासिनां कर्माणि अतो

ज्ञानकर्मणोः समुच्चयानुपपत्तिः । ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति । अर्जुनस्य प्रश्नानुपपत्तेश्च ।

यदि हि भगवता द्वितीये अध्याये ज्ञानं कर्म च समुच्चयेन त्वयानुष्ठेयमित्युक्तं स्यात्ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन इति । अर्जुनाय चेद्बुद्धिकर्मणी त्वयानुष्ठेये इति उक्ते या कर्मणो ज्यायसी बुद्धिः सा अप्युक्ता एवेति तत्किं कर्मणि घोरे मां नियोजयसि केशव इति प्रश्नो न कथंचन उपपद्यते ।

न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तम्, येन ज्यायसी चेदिति प्रश्नः स्यात् । यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न सम्भवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात्ततोऽयं प्रश्न उपपन्नः ज्यायसी चेदित्यादिः ।

अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते । न चाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यम् । अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनात्, ज्ञानकर्मणोः समुच्चयानुपपत्तिः । तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च । ज्ञानकर्मणोरेकं वद निश्चित्य इति च एकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसम्भवे ।

कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासम्भवमर्जुनस्यावधारणेन दर्शयिष्यति ।

अर्जुन उवाच
ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥३.१॥

ज्यायसी श्रेयसी चेत्यदि कर्मणः सकाशात्ते तव मता अभिप्रेता बुद्धिर्ज्ञानम् । हे जनार्दन ! यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यात् । न हि तदेव तस्मात्फलतोऽतिरिक्तं स्यात् । तथा च, कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिः । अश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति, तत्किं नु कारणमिति भगवत उपालम्भमिव कुर्वन् तत्किं कस्मात्कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशव इति च यदाह, तच्च नोपपद्यते । अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तोऽर्जुनेन
चावधारित चेत्, तत्किं कर्मणि घोरे मां नियोजयसि इत्यादि कथं युक्तं वचनम् ॥३.१॥

किं च

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥३.२॥

व्यामिश्रेणेव, यद्यपि विवक्ताभिधायी भगवान्, तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति । तेन मम बुद्धिं मोहयसीव, मम बुद्धिव्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयसि ? अतः ब्रवीमि । बुद्धिं मोहयसि इव मे मम इति । त्वं तु भिन्नकर्तृकयोः ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि मन्यसे, तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वा इदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा अन्यतरेण श्रेयोऽहमाप्नुयां प्राप्नुयाम् ।

यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात् । तत्कथं तयोरेकं वद इत्येकविषयैवार्जुनस्य शुश्रूषा स्यात् । न हि भगवता पूर्वमुक्तमन्यतरदेव ज्ञानकर्मणोः वक्ष्यामि, नैव द्वयमिति, येन उभयप्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयेत् ॥३.२॥

प्रश्नानुरूपमेव प्रतिवचनं

श्रीभगवानुवाच
लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३.३॥

लोकेऽस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघापाप। तत्र का सा द्विविधा निष्ठा इत्याह तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा
प्रोक्ता। कर्मयोगेन कर्म एव योगः कर्मयोगस्तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः।

यदि चैकेन पुरुषेण एकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्यानुष्ठेयं भगवता इष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तम्, कथमिहार्जुनाय उपसन्नाय प्रियाय विशिष्टाभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्? यदि पुनरर्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामि इति मतं भगवतः कल्प्येत, तदा रागद्वेषवानप्रमाणभूतो भगवान् कल्पितः स्यात्। तच्चायुक्तम्। तस्मात्कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः
॥

यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेस्तच्च स्थितमनिराकरणात्। तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वम्, भिन्नपुरुषानुष्ठेयत्ववचनात्। भगवत एवमेवानुमतमिति गम्यते ॥३.३॥

मां च बन्धकारणे कर्मण्येव नियोजयसि इति विषण्णमनसमर्जुनं कर्म नारभे इत्येवं मन्वानमालक्ष्य आह भगवान् न कर्मणामनारम्भादिति। अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सति इतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वम्, न स्वातन्त्र्येण। ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा, इत्येतमर्थं प्रदर्शयिष्यनाह भगवान्

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥३.४॥

न कर्मणा क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वा अनुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम्,

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ [म.भा. १२ २०८.८] इत्यादि स्मरणात्।

अनारम्भादननुष्ठानात्नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत्। पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः।
कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्ययात्तेषामारम्भान्नैष्कर्म्यमश्नुत इति गम्यते। कस्मात्पुनः कारणात्कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति ? उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात्। न ह्युपायमन्तरेण उपेयप्राप्तिरस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य, श्रुतौ इह च प्रतिपादनात्। श्रुतौ तावत्प्रकृतस्यात्मलोकस्य वेद्यस्य वेदनोपायत्वेन तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन [बृहदारण्यकोपनिषद् ४.४.२२] इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। इहापि च संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः [क्रईता ५.६], योगिनः कर्म
कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये [क्रईता ५.११], यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् [क्रईता १८.५] इत्यादि प्रतिपादयिष्यति।

ननु चाभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेतित्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति। लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरम्। अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेण ? इति प्राप्तम्। अत आह न च संन्यसनादेवेति। नापि संन्यसनादेव केवलात्कर्मपरित्यागमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥३.४॥

कस्मात्पुनः कारणात्कर्मसंन्यासमात्रादेव केवलात्ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छति इति हेत्वाकाङ्क्षायामाह

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥३.५॥

न हि यस्मात्क्षणमपि कालं जातु कदाचित्कश्चित्तिष्ठत्यकर्मकृत्सन् । कस्मात्? कार्यते प्रवर्त्यते हि यस्मादवश एवास्वतन्त्र एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः । अज्ञ इति वाक्यशेषः, यतो वक्ष्यति गुणैर्यो न विचाल्यते इति । सांख्यानां पृथक्करणातज्ञानामेव हि कर्मयोगः, न ज्ञानिनाम् । ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात्कर्मयोगो नोपपद्यते । तथा च व्याख्यातं वेदाविनाशिनम् [क्रईता २.२१] इत्यत्र ॥३.५॥

यत्त्वनात्मज्ञः चोदितं कर्म नारभते इति तदसदेवेत्याह

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥३.६॥

कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरन् चिन्तयनिन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥३.६॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥३.७॥

यस्तु पुनः कर्मण्यधिकृतोऽज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते अर्जुन कर्मेन्द्रियैः वाक्पाण्यादिभिः । किमारभते इत्याहकर्मयोगमसक्तः सन् फलाभिसन्धिवर्जितः स विशिष्यते इतरस्मात्मिथ्याचारात् ॥३.७॥

यतः एवमतः

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥३.८॥

नियतं नित्यं शास्त्रोपदिष्टम् । यो यस्मिन् कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म, तत्कुरु त्वं हे अर्जुन ! यतः कर्म ज्यायोऽधिकतरं फलतः । हि यस्मादकर्मणोऽकरणातनारम्भात् । कथम् ? शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येत्प्रसिद्धिं न गच्छेतकर्मणोऽकरणात् । अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥३.८॥

यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत् । कथम् ?

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥३.९॥

यज्ञो वै विष्णुः [टैत्त्ष्१.७.४] इति श्रुतेर्यज्ञ ईश्वरः । तदर्थं यत्क्रियते तत्यज्ञार्थं कर्म । तस्मात्कर्मणोऽन्यत्रान्येन कर्मणा लोकोऽयमधिकृतः कर्मकृत्कर्मबन्धनः [टैत्त्.Bहा. ३.१.६] कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोकः, न तु यज्ञार्थात् । अतस्तदर्थं यज्ञार्थं कर्म कौन्तेय, मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचार निर्वर्तय ॥३.९॥

इतश्चाधिकृतेन कर्म कर्तव्यम्

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥३.१०॥

सहयज्ञाः यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा पूर्वं सर्गादावुवाच उक्तवान् प्रजापतिः प्रजानां स्राष्टा । अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वम् । एष यज्ञो वो युष्माकमस्तु भवतु इष्टकामधुक् । इष्टानभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक् ॥३.१०॥

कथम् ?

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥३.११॥

देवानिन्द्रादीन् भावयत वर्धयतानेन यज्ञेन । ते देवा भावयन्तु आप्याययन्तु वृष्ट्यादिना वो युष्मान् । एवं परस्परमन्योन्यं भावयन्तः श्रेयः परं मोक्षलक्षणं विज्ञानप्राप्तिक्रमेणावाप्स्यथ । स्वर्गं वा परं श्रेयोऽवाप्स्यथ ॥३.११॥

किं च

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥३.१२॥

इष्टानभिप्रेतान् भोगान् हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति । स्त्रीपशुपुत्रादीन् यज्ञभाविता यज्ञैर्वर्धितास्तोषिता इत्यर्थः । तैर्देवैर्दत्तान् भोगानप्रदायादत्त्वा, आनृण्यमकृत्वेत्यर्थः । एभ्यो देवेभ्यः । यो भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवादिस्वापहारी ॥ ३.१२॥

ये पुनः

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥३.१३॥

देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वपापैश्चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः । ये त्वात्मंभरयो भुञ्जते ते त्वघं पापं स्वयमपि पापा ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणातात्महेतोः ॥३.१३॥

इतश्चाधिकृतेन कर्म कर्तव्यम् । जगच्चक्रप्रवृत्तिहेतुर्हि कर्म । कथम् ? इत्युच्यते

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥३.१४॥

अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि । पर्जन्याद्वृष्टेरन्नस्य संभवोऽन्नसंभवः । यज्ञाद्भवति पर्जन्यः ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ [ानु ३.७६] इति स्मृतेः ।

यज्ञोऽपूर्वम् । स च यज्ञः कर्मसमुद्भवः । ऋत्विग्यजमानयोश्च व्यापारः कर्म, तद्समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः ॥३.१४॥

तच्चैवंविधं कर्म कुतो जातमित्याह

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥३.१५॥

कर्म ब्रह्मोद्भवम् । ब्रह्म वेदः । स उद्भवः कारणं प्रकाशको यस्य तत्कर्म ब्रह्मोद्भवं विद्धि विजानीहि । ब्रह्म पुनः वेदाख्यमक्षरसमुद्भवमक्षरं ब्रह्म परमात्मा समुद्भवो यस्य ततक्षरसमुद्भवम् । ब्रह्म वेद इत्यर्थः । यस्मात्साक्षात्परमात्माख्यादक्षरात्पुरुषनिःश्वासवत्समुद्भूतं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात्सर्वगतम् । सर्वगतमपि सन्नित्यं सदा यज्ञविधिप्रधानत्वात्यज्ञे प्रतिष्ठितम् ॥३.१५॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥३.१६॥

एवमित्थमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायुरघं पापमायुर्जीवनं यस्य सोऽघायुः पापजीवन इति यावत् । इन्द्रियारामः इन्द्रियैरारामः आरमणमाक्रीडा विषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ, स जीवति । तस्मादज्ञेनाधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः । प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेन कर्तव्यमेवेत्येतन्न कर्मणामनारम्भाद्[गीता ३.४] इत्यत आरभ्य शरीरयात्रापि च ते न प्रसिध्येदकर्मण [गीता ३.८] इत्येवमन्तेन प्रतिपाद्य, यज्ञार्थात्कर्मणोऽन्यत्र [गीता ३.९] इत्यादिना मोघं
पार्थ स जीवति इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम् । तदकरणे च दोषसंकीर्तनं कृतम् ॥ ३.१६॥

एवं स्थिते किमेवं प्रवर्तितं चक्त्रं सर्वेणानुवर्तनीयम् ? आहो स्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामनात्मविदा ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैव ? इत्येवमर्थमर्जुनस्य प्रश्नमाशङ्कय स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थमेतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भ्योऽवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति । न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यत्कार्यमस्ति [बृहदारण्यकोपनिषद् ३.५.१] इत्येवं श्रुत्यर्थमिह गीताशास्त्रे
प्रतिपिपादयिषितमाविष्कुर्वन्नाह भगवान्

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥३.१७॥

यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिः आत्मन्येव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्याद्भवेदात्मतृप्तश्चात्मनैव तृप्तो नान्नरसादिना स मानवो मनुष्यः संन्यासी आत्मन्येव च सन्तुष्टः । सन्तोषो हि बाह्यार्थलाभे सर्वस्य भवति, तमनपेक्ष्य आत्मन्येव च सन्तुष्टः सर्वतो वीततृष्ण इत्येतत् । य ईदृशः आत्मवित्तस्य कार्यं करणीयं न विद्यते नास्तीत्यर्थः ॥३.१७॥

किं च

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥३.१८॥

नैव तस्य परमात्मरतेः कृतेन कर्मणार्थः प्रयोजनमस्ति । अस्तु तर्ह्यकृतेनाकरणेन प्रत्यवायाख्योऽनर्थः । नाकृतेनेह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैवास्ति । न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयः । व्यपाश्रयणमालम्बनं कंचित्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति, येन तदर्था क्रिया अनुष्ठेया स्यात् । न त्वमेतस्मिन् सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥३.१८॥

यतः एवम्

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥३.१९॥

तस्मातसक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय । असक्तो हि यस्मात्समाचरनीश्वरार्थं कर्म कुर्वन् परं मोक्षमाप्नोति पूरुषः सत्त्वशुद्धिद्वारेण इत्यर्थः ॥३.१९॥

यस्माच्च

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥३.२०॥

कर्मणैव हि यस्मात्पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ताः । के ? जनकादयः जनका वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनाः, ततः लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः । अथाप्राप्तसम्यगदर्शनाः जनकादयः, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्त्रमेण संसिद्धिमास्थिता इति व्याख्येयः लोकः । अथ मन्यसे पूर्वैरपि जनकादिभिः अजानद्भिरेव कर्तव्यं कर्म कृतम् । तावता नावश्यमन्येन कर्तव्यं
सम्यग्दर्शनवता कृताथेनेति । तथापि प्रारब्धकर्मायत्तः त्वं लोकसंग्रहमेवापि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहः, तमेवापि प्रयोजनं संपश्यन् कर्तुमर्हसि ॥३.२०॥

लोकसंग्रहः किमर्थं कर्तव्य इत्युच्यते

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥३.२१॥

यद्यत्कर्म आचरति करोति श्रेष्ठः प्रधानः तत्तदेव कर्म आचरति इतरोऽन्यः जनः तदनुगतः । किं च सः श्रेष्ठः यत्प्रमाणं कुरुते लौकिकं वैदिकं वा लोकः ततनुवर्तते तदेव प्रमाणीकरोति इत्यर्थः ॥३.२१॥

यद्यत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि ?

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्तैव च कर्मणि ॥३.२२॥

न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किंचन किंचिदपि । कस्मात्? नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयम् । तथापि वर्त एव च कर्मण्यहम् ॥३.२२॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥३.२३॥

यदि हि पुनरहं न वर्तेय जातु कदाचित्कर्मण्यतन्द्रितोऽनलसः सन्मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्याः । हे पार्थ ! सर्वशः सर्वप्रकारैः ॥३.२३॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥३.२४॥

उत्सीदेयुर्विनश्येयुरिमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मणोऽभावात्न कुर्यां कर्म चेदहम् । किं च, संकरस्य च कर्ता स्याम् । तेन कारणेन उपहन्यामिमाः प्रजाः । प्रजानामनुग्रहाय प्रवृत्त उपहतिमुपहननं कुर्यामित्यर्थः । मम ईश्वरस्याननुरूपमापद्यते ॥३.२४॥

यदि पुनरहमिव त्वं कृतार्थबुद्धिः, आत्मविदन्यो वा, तस्यापि आत्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इत्याह

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥३.२५॥

सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथासक्तः सन् । तद्वत्किमर्थं करोति ? तत्सृणु चिकीर्षुः कर्तुमिच्छुः लोकसंग्रहम् ॥३.२५॥

एवं लोकसंग्रहं चिकीर्षेर्न ममात्मविदः कर्तव्यमस्ति अन्यस्य वा लोकसंग्रहं मुक्त्वा । ततस्तस्य आत्मविदः इदमुपदिश्यते

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥३.२६॥

बुद्धिभेदो बुद्धिभेदो मया इदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलमिति निश्चयरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानामासङ्गवताम् । किं नु कुर्यात्? जोषयेत्कारयेत्सर्वकर्माणि विद्वान् स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥३.२६॥

अविद्वानज्ञः कथं कर्मसु सज्जते ? इत्याह

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥३.२७॥

प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था । तस्याः प्रकृतेः गुणैः विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघातात्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढ आत्मा अन्तःकरणं यस्य

सोऽयं कार्यकरणधर्मा कार्यकरणाभिमानी अविद्यया कर्माणि आत्मनि मन्यमानः तत्तत्कर्मणामहं कर्तेति मन्यते ॥३.२७॥

यः पुनर्विद्वान्

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥३.२८॥

तत्त्ववित्तु महाबाहो । कस्य तत्त्ववित्? गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः । गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्तन्ते न आत्मा इति मत्वा न सज्जते सक्तिं न करोति ॥३.२८॥

ये पुनः

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥३.२९॥

प्रकृतेः गुणैः सम्यक्मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलाय इति । तान् कर्मसङ्गिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान्मन्दप्रज्ञान् कृत्स्नवितात्मवित्स्वयं न विचालयेत्बुद्धिभेदकरणमेव चालनं तन्न कुर्यातित्यर्थः ॥३.२९॥

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमिति, उच्यते

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३.३०॥

मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्या, अहं कर्ता ईश्वराय भृत्यवत्करोमि इत्यनया बुद्ध्या । किं च, निराशीस्त्यक्ताशीः निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसन्तापो विगतशोकः सन्नित्यर्थः ॥३.३०॥

यदेतन्मम मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३.३१॥

ये मे मदीयमिदं मतं नित्यमनुतिष्ठन्ति अनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधाना अनसूयन्तोऽसूयां च मयि परमगुरौ वासुदेवेऽकुर्वन्तो, मुच्यन्ते तेऽप्येवंभूताः कर्मभिर्धर्माधर्माख्यैः ॥३.३१॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३.३२॥

ये तु तद्विपरीता एतन्मम मतमभ्यसूयन्तो निन्दन्तो नानुतिष्ठन्ति नानुवर्तन्ते मे मतम् । सर्वेषु ज्ञानेषु विविधं मूढास्ते ।

सर्वज्ञानविमूढांस्तान् विद्धि जानीहि नष्टान्नाशं गतानचेतसोऽविवेकिनः ॥३.३२॥

कस्मात्पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्तः परधर्माननुतिष्ठन्ति ? स्वधर्मं च नानुवर्तन्ते ? त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्? तत्राह

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३.३३॥

सदृशमनुरूपं चेष्टते चेष्टां करोति । कस्याः ? स्वस्याः स्वकीयायाः प्रकृतेः । प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारा वर्तमानजन्मादावभिव्यक्ताः । सा प्रकृतिः । तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि चेष्टते, किं पुनर्मूर्खः ? तस्मात्प्रकृतिं यान्त्यनुगच्छन्ति भूतानि प्राणिनः । निग्रहो निषेधरूपः किं करिष्यति मम वान्यस्य वा ? दुर्निग्रहा प्रकृतिरिति वाक्यशेषः ॥३.३३॥

यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते, न च प्रकृतिशून्यः कश्चिदस्ति, ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३.३४॥

इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यंभाविनौ तत्रायं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते । शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् । या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति । तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति । यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति, न प्रकृतिवशः
। तस्मात्तयो रागद्वेषयोर्वशं नागच्छेत् । यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविव पथीत्यर्थः ॥३.३४॥

तत्र रागद्वेषप्रयुक्तो मन्यते शास्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एव इति, तदसत्

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३.३५॥

श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपि विगतगुणोऽपि अनुष्ठीयमानः परधर्मात्स्वनुष्ठितात्साद्गुण्येन संपादितादपि । स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् । कस्मात्? परधर्मः भयावहः नरकादिलक्षणं भयमावहतीति यतः ॥३.३५॥

यद्यपि अनर्थमूलं ध्यायतो विषयान् पुंस [गीता २.६२] इति रागद्वेषौ ह्यस्य परिपन्थिनौ [गीता ३.३४] इति चोक्तम् । विक्षिप्तमनवधारितं च तदुक्तम् । तत्संक्षिप्तं निश्चितं च इदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्यामिति अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३.३६॥

अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्योऽयं पापं कर्म चरति आचरति पूरुषः पुरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय वृष्णिकुलप्रसूत ! बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्तः ॥३.३६॥

शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसीति भगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३.३७॥

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥ [Vइड़् ६.५.७४]

इत्यैश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते,

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ [Vइड़् ६.५.७८]
उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति ।

काम इति । काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव रजोगुणसमुद्भवो रजश्च तद्गुणश्च रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवः । रजोगुणस्य वा समुद्भवः । कामो ह्युद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति । तृष्णया ह्यहंकारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनः । अतएव महापाप्मा । कामेन हि प्रेरितो जन्तुः पापं करोति । अतो विद्ध्य्
एनं काममिह संसारे वैरिणम् ॥३.३७॥

कथं वैरी ? इति दृष्टान्तैः प्रत्याययति

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३.३८॥

धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन, यथा वा आदर्शो मलेन च, यथोल्बेन च जरायुणा गर्भवेष्टनेन चावृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥३.३८॥

किं पुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमित्युच्यते

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३.३९॥

आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा, ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति । दुःखी च भवति नित्यमेव । अतोऽसौ ज्ञानिनो नित्यवैरी, न तु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाहं दुःखित्वमापादित इति, न पूर्वमेव । अतो ज्ञानिन एव नित्यवैरी । किंरूपेण ? कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन च ॥३.३९॥

किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्य लोकस्य ? इत्यपेक्षायामाह, ज्ञाते हि शत्रोरधिष्ठाने सुखेन निबर्हणं कर्तुं शक्यत इति

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।

एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥३.४०॥

इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते । एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयत्येष कामो ज्ञानमावृत्य आच्छाद्य देहिनं शरीरिणम् ॥३.४०॥

यत एवम्

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥३.४१॥

तस्मात्त्वमिन्द्रियाण्यादौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्चात्मादीनामवबोधः । विज्ञानं विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं नाशकरं प्रजहिहि आत्मनः परित्यजेत्यर्थः ॥३.४१॥

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम् । तत्र किमाश्रयः कामं जह्यातित्युच्यते

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥३.४२॥

इन्द्रियाणि श्रोत्रादीनि पञ्च । देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टान्याहुः पण्डिताः । तथा इन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् । तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका । तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तम् । बुद्धेः परतस्तु स । स बुद्धेर्द्रष्टा । पर आत्मा ॥३.४२॥

ततः किम्

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥३.४३॥

एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक्स्तम्भनं कृत्वात्मानं स्वेनैवात्मना संस्कृतेन मनसा सम्यक्समाधायेत्यर्थः । जह्येनं शत्रुं हे महाबाहो ! कामरूपं दुरासदं दुःखेनासद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥३.४३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
तृतीयोऽध्यायः
॥३॥

# चतुर्थोऽध्यायः

योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणः स सन्न्यासः कर्मयोगोपायः । यस्मिन् वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवता । अतएव परिसमाप्तः प्रवृत्तिं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान् ।

श्रीभगवानुवाच

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥४.१॥

इममध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवानहम् । जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुं, ब्रह्मक्षत्रे परिपालिते जगत्परिपालयितुमलम् । अव्ययमव्ययफलत्वात् । न ह्यस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति । स च विवस्वान्मनवे प्राह । मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥४.१॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥४.२॥

एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च ते ऋषयश्च राजर्षयो विदुरिमं योगम् । स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसम्प्रदायः संवृत्तो हे परन्तप ! आत्मनो विपक्षभूताः पर उच्यन्ते तान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परन्तपः शत्रुतापन इत्यर्थः ॥४.२॥

दुर्लभानजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकं चापुरुषार्थसम्बन्धिनम्

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥४.३॥

स एवायं मया ते तुभ्यमद्य इदानीं योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चासीति । रहस्यं हि यस्मादेतदुत्तमं योगो ज्ञानमित्यर्थः ॥४.३॥

भगवता विप्रतिषिद्धमुक्तमिति मा भूत्कस्यचिद्बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन्नर्जुन उवाच

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४.४॥

अपरमर्वाग्वसुदेवगृहे भवतो जन्म परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वत आदित्यस्य । तत्कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिमं योगम् । स एव त्वमिदानीं मह्यं प्रोक्तवानसीति ॥४.४॥
या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच पदर्थो ह्यर्जुनस्य प्रश्नः

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥४.५॥

बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन तान्यहं वेद जाने सर्वाणि न त्वं वेत्थ जानीषे । धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहम् । हे परन्तप ॥४.५॥

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्म ? इत्युच्यते

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥४.६॥

अजोऽपि जन्मरहितोऽपि सन्, तथाव्ययात्माक्षीणज्ञानशक्तिस्वभावोऽपि सन्, तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि सन् । प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिकां यस्या वशे सर्वमिदं जगद्वर्तते । यया मोहितं जगत्सत्स्वमात्मानं वासुदेवं न जानाति । तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य संभवामि देहवानिव भवामि जात इवात्ममाययात्मनो मायया, न परमार्थतो लोकवत् ॥४.६॥

तच्च जन्म कदा किमर्थं च ? इत्युच्यते

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥४.७॥

यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति । भारत ! अभ्युत्थानमुद्भवोऽधर्मस्य तदात्मानं सृजाम्यहं मायया ॥४.७॥

किमर्थम् ?

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥४.८॥

परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानाम् । विनाशाय च दुष्कृतां पापकारिणाम् । किं च धर्मसंस्थापनार्थाय धर्मस्य सम्यक्स्थापनं तदर्थं सम्भवामि । युगे युगे प्रतियुगम् ॥४.८॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥४.९॥

तज्जन्म मायारूपं, कर्म च साधुपरित्राणादि, मे मम दिव्यमप्राकृतमैश्वरमेवं यथोक्तं यो वेत्ति तत्त्वतस्तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति, मामेत्यागच्छति, स मुच्यते हेऽर्जुन ॥४.९॥

नैष मोक्षमार्ग इदानीं प्रवृत्तः । किं तर्हि ? पूर्वमपि

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥४.१०॥

वीतरागभयक्रोधाः रागश्च भयं च क्रोधश्च रागभयक्रोधाः, वीता विगता रागभयक्रोधा येभ्यस्ते वीतरागभयक्रोधाः । मन्मया ब्रह्मविद ईश्वराभेददर्शिनः । मामेव परमेश्वरमुपाश्रिताः । केवलज्ञाननिष्ठा इत्यर्थः । बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपः । तेन ज्ञानतपसा । पूताः परां शुद्धिं गताः सन्तः । मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः । इतरतपोनिरपेक्षा ज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति विशेषणम् ॥४.१०॥

तव तर्हि रागद्वेषौ स्तः । येन केभ्यश्चितेवात्मभावं प्रयच्छसि, न सर्वेभ्यः । इत्युच्यते

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥४.११॥

ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजाम्यनुगृह्णाम्यहमित्येतत् । तेषां मोक्षं प्रत्यनर्थित्वात् । न ह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्सम्भवति । अतो ये यत्फलार्थिनस्तांस्तत्फलप्रदानेन, ये यथोक्तकारिणस्त्वफलार्थिनो मुमुक्षवश्च तान् ज्ञानप्रदानेन । ये ज्ञानिनः सन्न्यासिनो मुमुक्षवश्च तान्मोक्षप्रदानेन, तथार्तानार्तिहरणेन इत्येवं यथा प्रपद्यन्ते ये तांस्तथैव भजामीत्यर्थः । न पुनार्रागद्वेषनिमित्तं मोहनिमित्तं वा कंचिद्भजामि । सर्वथापि सर्वावस्थस्य ममेश्वरस्य

वर्त्म मार्गमनुवर्तन्ते मनुष्याः । यत्फलार्थितया यस्मिन् कर्मण्यधिकृता ये प्रयतन्ते ते मनुष्या अत्र उच्यन्ते हे पार्थ सर्वशः सर्वप्रकारैः ॥४.११॥

यदि तवेश्वरस्य रागादिदोषाभावात्सर्वप्राणिष्वनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवः सर्वं [गीता ७.१९] इति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात्त्वामेव सर्वे न प्रतिपद्यन्ते ? इति शृणु तत्र कारणम्

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥४.१२॥

काङ्क्षन्तोऽभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यजन्त इहास्मिन् लोके देवता इन्द्राद्ग्न्याद्याः । अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद, यथा पशुः । एवं स देवानाम् [बृहदारण्यकोपनिषद् १.४.१०] इति श्रुतेः । तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मान्मानुषे लोके । मनुष्यलोके हि शास्त्राधिकारः । क्षिप्रं हि मानुषे लोके इति विशेषणात् । अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मानुषे लोके वर्णाश्रमादिकर्माधिकार
इति विशेषः । तेषां च वर्णाश्रमाधिकारिणां कर्मिणां फलसिद्धिः क्षिप्रं भवति कर्मजा कर्मणो जाता ॥४.१२॥

मानुष एव लोके वर्णाश्रमादिकर्माधिकारः । नान्येषु लोकेष्विति नियमः किंनिमित्तः ? इति । अथवा वर्णाश्रमादिप्रविभागोपेता मनुष्या मम वर्त्मानुवर्तन्ते सर्वश [गीता ४.११] इत्युक्तं कस्मात्पुनः कारणान्नियमेन तवैव वर्त्मानुवर्तन्ते, नान्यस्य किम् ? उच्यते

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥४.१३॥

चातुर्वर्ण्यं चत्वार एव वर्णाश्चातुर्वर्ण्यं मयेश्वरेण सृष्टमुत्पादितं ब्राह्मणोऽस्य मुखमासीत्[ऋक्८.४.१९.२, यजुः ३२.११] इत्यादि श्रुतेः । गुणकर्मविभागशो गुणविभागशः कर्मविभागशश्च । गुणाः सत्त्वरजस्तमांसि । तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तपः [गीता १८.४२] इत्यादीनि कर्माणि । सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि । तमौपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि । रजौपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म । इत्येवं गुणकर्मविभागशश्चातुर्गुण्यं मया सृष्टमित्यर्थः
। तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु । अतो मानुषे लोके इति विशेषणम् । हन्त तर्हि चातुर्वर्ण्यसर्गादेः कर्मणः कर्तृत्वात्तत्फलेन युज्यसेऽतो न त्वं नित्यमुक्तो नित्येश्वरश्चेति । उच्यते यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारं, अतएवाव्ययमसंसारिणं च मां विद्धि ॥४.१३॥

येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतस्तेषामकर्तैवाहम् । यतो

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥४.१४॥

न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेनाहङ्काराभावात् । न च तेषां कर्मणां फले मे मम स्पृहा तृष्णा । येषां तु संसारिणामहं कर्तेत्याभिमानः कर्मसु स्पृहा तत्फलेषु च तान् कर्माणि लिम्पन्तीति युक्तम् । तदभावान्न मां कर्माणि लिम्पन्तीति । एवं योऽन्येऽपि मामात्मत्वेनाभिजानाति नाहं कर्ता न मे कर्मफले स्पृहेति न कर्मभिर्न बध्यते । तस्यापि न देहाद्यारम्भकानि कर्माणि भवन्तीत्यर्थः ॥४.१४॥

नाहं कर्ता, न मे कर्मफले स्पृहेति

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥४.१५॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभिः । कुरु तेन कर्मैव त्वम् । न तुष्णीमासनं नापि संन्यासः कर्तव्यः । तस्मात्त्वत्पूर्वैरप ्यनुष्ठितत्वाद्यद्यनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थम् । तत्त्वविच्चेत्लोकसंग्रहार्थम् । पूर्वे जनकादिभिः पूर्वतरं कृतम् । नाधुनातनकृतं निवर्तितम् ॥४.१५॥

तत्र कर्म चेत्कर्तव्यं त्वद्वचनादेव करोम्यहम् । किं विशेषितेन ? पूर्वैः पूर्वतरं कृतम् [गीता ४.१५] इति । उच्यते यस्मान्महद्वैषम्यं कर्मणि । कथम् ?

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥४.१६॥

किं कर्म किं चाकर्मेति कवयो मेधाविनोऽप्यत्रास्मिन् कर्मादिविषये मोहिता मोहं गताः । अतस्ते तुभ्यमहं कर्माकर्म च प्रवक्ष्यामि यज्ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसेऽशुभात्संसारात् ॥४.१६॥

न चैतत्त्वया मन्तव्यं, कर्म नाम देहादिचेष्टा लोकप्रसिद्धं, अकर्म नाम तदक्रिया तूष्णीमासनम् । किं तत्र बोद्धव्यम् ? इति । कस्मात्? उच्यते

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥४.१७॥

कर्मणः शास्त्रविहितस्य हि यस्मादप्यस्ति बोद्धव्यम् । बोद्धव्यं चास्त्येव विकर्मणः प्रतिषिद्धस्य । तथाकर्मणश्च तूष्णीम्भावस्य बोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्तव्यः । यस्माद्गहना विषमा दुर्ज्ञाना कर्मण इत्युपलक्षणार्थं कर्मादीनां कर्माकर्मविकर्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥४.१७॥

किं पुनस्तत्त्वं कर्मादेर्यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातम् ? उच्यते

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥४.१८॥

कर्मणि । कर्म क्रियत इति कर्म व्यापारमात्रं, तस्मिन् कर्मण्यकर्म कर्माभावं यः पश्येत् । अकर्मणि च कर्माभावे कर्तृतन्त्रत्वात्प्रवृत्तिनिवृत्त्योर्वस्त्वप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव कर्म यः पश्येत्पश्यति । स बुद्धिमान्मनुष्येषु, स युक्तो योगी च कृत्स्नकर्मकृत्समस्तकर्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी ।

ननु किमिदं विरुद्धमुच्यते कर्मण्यकर्म यः पश्येदिति । अकर्मणि च कर्म इति । न हि कर्माकर्म स्यादकर्म वा कर्म, तत्र विरुद्धं कथं पश्येद्द्रष्टा ? न । अकर्मैव परमार्थतः सत्कर्मवदवभासते मूढदृष्टेर्लोकस्य, तथा कर्मैवाकर्मवत् । तत्र यथाभूतदर्शनार्थमाह भगवान् कर्मण्यकर्म यः पश्येदित्यादि । अतो न विरुद्धं बुद्धिमत्त्वाद्युपपत्तेश्च । बोद्धव्यमिति च यथाभूतदर्शनमुच्यते । न च विपरीतज्ञानादशुभान्मोक्षणं स्यात्यज्ज्ञात्वा मोक्ष्यसेऽशुभात्[गीता ४.१६] इति चोक्तम् । तस्मात्कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिस्तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं कर्मण्यकर्म यः इत्यादि ।

न चात्र कर्माधिकरणकर्मास्ति, कुण्डे बदराणीव । नाप्यकर्माधिकरणं कर्मास्ति कर्माभावत्वादकर्मणः । अतो विपरीतगृहीते एव कर्माकर्मणी लौकिकैः, यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतम् ।

ननु कर्म कर्मैव सर्वेषां न क्वचिद्व्यभिचरति । तन्न नौस्थस्य नावि गच्छन्त्यां तटस्थेस्वगतिषु नगेषु प्रतिकूलगतिदर्शनात् । दूरेषु चक्षुषासन्निकृष्टेषु गच्छत्सु गत्यभावदर्शनात् । एवमिहाप्यकर्मण्यहं करोमीति कर्मदर्शनं कर्मणि चाकर्मदर्शनं विपरीतदर्शनं येन,

तन्निराकरणार्थमुच्यते कर्मण्यकर्म यः पश्येतित्यादि ।

तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरीतदर्शनभावितताया मोमुह्यमानो लोकः श्रुतमप्यसकृत्तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गमवतार्यावतार्य चोदयतीति पुनः पुनरुत्तरमाह भगवान् । दुर्विज्ञेयत्वं चालक्ष्य वस्तुनः । अव्यक्तोऽयमचिन्त्योऽयं [गीता २.२५], न जायते म्रियते [गीता २.२७] इत्यादिनात्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च । तस्मिन्नात्मनि कर्माभावेऽकर्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढम् । यतः किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः [गीता ४.१६] देहाद्याश्रयं कर्मात्मन्यध्यारोप्य । अहं कर्ता ममैतत्कर्म, मयास्य कर्मणः फलं भोक्तव्यमिति च । तथा अहं
तूष्णीं भवामि, येनाहं निरायासोऽकर्मा सुखी स्यामिति कार्यकरणाश्रयव्यापारोपरमं तत्कृतं चसुखित्वमात्मन्यध्यारोप्य न करोमि किंचित्तूष्णीं सुखमासमित्यभिमन्यते लोकः । तत्रेदं लोकस्य विपरीतदर्शनापनयनायाह भगवान् कर्मण्यकर्म यः पश्येदित्यादि ।

अत्र च कर्म कर्मैव सत्कार्यकरणाश्रयं कर्मरहितोऽविक्रिय आत्मनि सर्वैरध्यस्तम् । यतः पण्डितोऽप्यहं करोमीति मन्यते । अथ आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकुलस्थेष्विव गतिः प्रतिलौम्येन । अतोऽकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येत् । अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते तूष्णीमकुर्वन् सुखमासे इत्यहङ्काराभिसन्धिहेतुत्वात्तस्मिन्नकर्मणि च कर्म यः पश्येत् । य एवं कर्माकर्मविभागज्ञः स बुद्धिमान् पण्डितो मनुष्येषु । स युक्तो योगी कृत्स्नकर्मकृच्च । सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः ।

अयं श्लोकोऽन्यथा व्याख्यातः कैश्चित् । कथम् ? नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या । तेषां चाकरणमकर्म । तच्च प्रत्यवायफलत्वात्कर्मोच्यते गौण्यैव वृत्त्या । तत्र नित्ये कर्मण्यकर्म यः पश्येत्फलाभावात् । यथा धेनुरपि गौरगौरुच्यते क्षीराख्यं फलं न प्रयच्छतीति तद्वत् । तथा नित्याकरणे त्वकर्मणि कर्मः आश्येन्नरकादिप्रत्यवायफलं प्रयच्छतीति । नैतद्युक्तं व्याख्यानम् । एवंज्ञानादशुभान्मोक्षानुपपत्तेः । यज्ज्ञात्वा मोक्ष्यसेऽशुभात्[गीता ४.१६] इति भगवतोक्तं वचनं बोध्येत । कथम् ? नित्यानाम् अनुष्ठानादशुभात्स्यान्नाम मोक्षणम् । न तु तेषां फलाभावज्ञानात् । न हि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा । न च भगवतिवेहोक्तम् ।

एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तम् । न ह्यकर्मणि कर्मेति दर्शनं कर्तव्यतयेह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम् । न चाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात्किंचित्फलं स्यात् । नापि नित्याकरणं ज्ञेयत्वेन चोदितम् । नापि कर्माकर्मेति मिथादर्शनादशुभान्मोक्षणम् । बुद्धिमत्त्वं, युक्तता, कृत्स्नकर्मकृत्त्वादि च फलमुपपद्यते स्तुतिर्वा । मिथ्याज्ञानमेव हि साक्षादशुभरूपं कुतोऽन्यस्मादशुभान्मोक्षणम् ? न हि तमस्तमसो निवर्तकं भवति ।

ननु कर्मणि यदकर्मदर्शनमकर्मणि वा कर्मदर्शनं, न तन्मिथ्याज्ञानम् । किं तर्हि गौणं फलभावाभावनिमित्तम् ? न, कर्माकर्मविज्ञानादपि गौणात्फलस्याश्रवणात् । नापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषो लभ्यते । स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति । तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किम् ? तत्रैव व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात् । न चैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु, नापि शब्दान्तरेण पुनः पुनरुच्यमानं सुबोधं स्यादित्येवं वक्तुं युक्तम् । कर्मण्येवाधिकारस्ते [गीता २.४७] इत्यत्र हि स्फुटतर उक्तोऽर्थो न पुनर्वक्तव्यो भवति । सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव, न निष्प्रयोजनं बोद्धव्यमित्युच्यते ।

न च मिथ्याज्ञानं बोद्धव्यं भवति तत्प्रत्युपस्थापितं वा वस्त्वाभासम् । नापि नित्यानामकरणादभावात्प्रयवायभावोत्पत्तिः । नासतो विद्यते भावो [गीता २.१६] इति वचनात् । तत्कथमसतः सज्जायते [Cहाउ ६.२.२] इति च दर्शितम् । असतः सज्जन्मप्रतिषेधादसतः सदुत्पत्तिं ब्रुवताऽसदेव सद्भवेत् । सच्चासद्भवेदित्युक्तं स्यात् । तच्चायुक्तं, सर्वप्रमाणविरोधात् । न च निष्फलं विदध्यात्कर्म शास्त्रं दुःखस्वरूपत्वात् । दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः । तदकरणे च नरकपाताभ्युपगमेऽनर्थायैव । उभयथापि करणेऽकरणे च शास्त्रं निष्फलं कल्पितं स्यात् । स्वाभ्युपगमविरोधश्च नित्यं निष्फलं कर्मेत्यभ्युपगम्य मोक्षफलायेति ब्रुवतः । तस्माद्यथाश्रुत एवार्थः कर्मण्यकर्म य इत्यादेः । तथा च व्याख्यातोऽस्माभिः श्लोकः ॥४.१८॥

तदेतत्कर्मण्यकर्मादिदर्शनं स्तूयते

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥४.१९॥

यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः कर्माणि समारभ्यन्त इति समारम्भाः । कामसंकल्पवर्जिताः कामैस्तत्कारणैश्च सङ्कल्पवर्जिता मुधैव चेष्टामात्रा अनुष्ठीयन्ते । प्रवृत्तेन चेल्लोकसङ्ग्रहार्थं, निवृत्तेन चेज्जीवनमात्रार्थं, तं ज्ञानाग्निदग्धकर्माणं कर्मादावकर्मादिदर्शनं ज्ञानं, तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य । तमाहुः परमार्थतः पण्डितं बुधाः ब्रह्मविदः ॥४.१९॥

यस्तु कर्मादावकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निष्कर्मा सन्न्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्तते, यद्यपि प्राग्विवेकतः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन्नुत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात्, स सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परियजत्येव । स कुतश्चिन्निमित्तात्कर्मपरित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसङ्ग्रहार्थं पूर्ववत्कर्मणि प्रवृत्तोऽपि नैव किंचित्करोति ज्ञानाग्निदग्धकर्मत्वात्तदीयं कर्माकर्मैव सम्पद्यत इत्येतमर्थं दर्शयिष्यन्नाह

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥४.२०॥

त्यक्त्वा कर्मस्वभिमानं फलासङ्गं च यथोक्तेन ज्ञानेन नित्यतृप्तो निराकाङ्क्षो विषयेष्वित्यर्थः । निराश्रय आश्रयरहितः । आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसाधयिषति । दृष्टादृष्टफलसाधनाश्रयरहित इत्यर्थः । विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव । तस्य निष्क्रियात्मदर्शनसम्पन्नत्वात् । तेनैवम्भूतेन स्वप्रयोजनाभावात्ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते, ततो निर्गमासम्भवाल्लोकसङ्ग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत्कर्मण्यभिप्रवृत्तोऽपि निष्क्र्यात्मदर्शनसम्पन्नत्वान्नैव किंचित्करोति सः
॥४.२०॥

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्माम्भाद्ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनः, स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमप्यश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इति । एतदर्थं दर्शयितुमाह

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४.२१॥

निराशीर्निर्गता आशिषो यस्मात्स निराशीः । यतचित्तात्मा चित्तमन्तःकरणम् । आत्मा बाह्यः कार्यकरणसंघातः । तावुभावपि यतौ संयतौ यस्य स यतचित्तात्मा । त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहो येन स त्यक्तसर्वपरिग्रहः । शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं तत्रापि अभिमानवर्जितं कर्म कुर्वन् । नाप्नोति न प्राप्नोति किल्बिषमनिष्टरूपं पापं धर्मं च । धर्मोऽपि मुमुक्षोरनिष्टरूपं किल्बिषमेव । बन्धापादकत्वात् । तस्मात्ताभ्यां मुक्तो भवति, संसारान्मुक्तो भवतीत्यर्थः
।

किं च शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतम् ? आहो स्विच्छरीरस्थितिमात्रप्रयोजनं शारीरं कर्म ? इति । किं चातो यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शरीरम् ? इति । उच्यते यदा शरीरनिर्वर्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत । शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतो
ऽप्राप्तप्रतिषेधप्रसङ्गः । शारीरं कर्म कुर्वनिति विशेषणात्केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन् प्राप्नोति किल्बिषमित्युक्तं स्यात् ।

तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत । प्रतिषिद्धसेविपक्षेऽपि भूतार्थानुवादमात्रमनर्थकं स्यात् । यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्, तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यमन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगातहं करोमि इत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन्नाप्नोति किल्बिषम् । एवम्भूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसम्भवात्
किल्बिषं संसारं नाप्नोति । ज्ञानाग्निदग्धसर्वकर्मत्वादप्रतिबन्धेन मुच्यते एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः । एवं शरीरं केवलं कर्म इत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥४.२१॥

त्यक्तसर्वपरिग्रहस्य यतेरन्नादेः शरीरस्थितिहेतोर्ः परिग्रहस्याभावाद्याचनादिना शरीरस्थितौ कर्तव्यतायां प्राप्तायामयाचितमसंक्प्तमुपपन्नं यद्दच्छया [म.भा. १४.४६.१९ Bऔधयनधर्मसूत्र २१.८.१२] इत्यादिना वचनेनानुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्वन्नाह

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥४.२२॥

यदृच्छालाभसन्तुष्टः प्रार्थितोपनतो लाभो यदृच्छालाभः, तेन सन्तुष्टः संजातालंप्रत्ययः । द्वन्द्वातीतो द्वन्द्वैः शीतोष्णादिभिर्हन्यमानोऽप्यविषण्णचित्तो द्वन्द्वातीत उच्यते । विमत्सरो विगतमत्सरो निर्वैरबुद्धिः । समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च, य एवम्भूतो यतिरन्नादेः शरीरस्थितिहेतोर्लाभालाभयोः समो हर्षविषादवर्जितः, कर्मादावकर्मादिदर्शी, यथाभूतात्मदर्शननिष्ठः सन् शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये नैव किंचित्करोमीति [गीता ५.८] गुणा गुणेषु वर्तन्त [गीता ३.२८] इत्येवं सदा सम्परिचक्षाण आत्मनः कर्तृत्वाभावं पश्यन्नेव किंचिद्भिक्षाटनादिकं कर्म करोति । लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणादिजनितेनाकर्त्रैव । स एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते, बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्युक्तानुवाद एवैषः ॥४.२२॥

त्यक्त्वा कर्मफलासङ्गं [गीता ४.२०] इत्यनेन श्लोकेन यः प्रारब्धकर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शनसम्पन्नः स्यात्तदा तस्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात्तदसम्भवे सति पूर्ववत्तस्मिन् कर्मण्यभिप्रवृत्तस्यापि नैव किंचित्करोति स [गीता ४.२०] इतिकर्माभावः प्रदर्शितः । यस्यैवं कर्माभावो दर्शितस्तस्यैव

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥४.२३॥

गतसङ्गस्य सर्वतो निवृत्तासक्तेर्मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्य, ज्ञानावस्थितचेतसो ज्ञान एवावस्थितं चेतो यस्य सोऽयं ज्ञानावस्थितचेताः । तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयतः कर्म समग्रं सहाग्रेण फलेन वर्तत इति समग्रं कर्म तत्समग्रं प्रविलीयते विनश्यतीत्यर्थः ॥४.२३॥

कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भमकुर्वत्समग्रं प्रविलीयत इत्युच्यते ? यतः

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥४.२४॥

ब्रह्मार्पणं येन करणेन ब्रह्मविधविरग्नावर्पयति । तद्ब्रह्मैवेति पश्यति तस्यात्मव्यतिरेकेणाभावं पश्यति । यथा शुक्तिकायां रजताभावं पश्यति तदुच्यते ब्रह्मैवार्पणमिति । यथा यद्रजतं तच्छुक्तिकैवेति । ब्रह्म अर्पणमित्यसमस्ते पदे यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः ।

ब्रह्म हविस्तथा यद्धविर्बुद्ध्या गृह्यमाणं तद्ब्रह्मैवासय् । तथा ब्रह्माग्नौ इति समस्तं पदम् । अग्निरपि ब्रह्मैव । यत्र हूयते ब्रह्मणा कर्त्रा ब्रह्मैव कर्तेत्यर्थः । यत्तेन हुतं हवनक्रिया तद्ब्रह्मैव । यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव । ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन् समाधिर्यस्य स ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम् ।

एवं लोकसङ्ग्रहं चिकीर्षुणापि क्रियमाणं करम्, परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमृदित्वात् । एवं सति निवृत्तकर्मणोऽपि सर्वकर्मसन्न्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसम्पादनं ज्ञानस्य सुतरामुपपद्यते । यदर्पणाद्यधियज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति । अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात् । तस्माद्ब्रह्मैवेदं सर्वमित्यभिजानतो विदुषः सर्वकर्माभावः ।

कारकबुद्ध्यभावाच्च । नहि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टम् । सर्वमेवाग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसम्प्रदानादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसन्धिमच्च दृष्टम् । नोपमृदितक्रियाकारकफलभेदबुद्धिमत्कर्तृत्वाभिमानफलाभिसन्धिरहितं वा । इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धि कर्मातोऽकर्मैव तत् ।

तथा च दर्शितं कर्मण्यकर्म यः पश्येत्[गीता ४.१८], कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः [गीता ४.२०], गुणा गुणेषु वर्तन्ते [गीता ३.२८], नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्[गीता ५.८] इत्यादिभिः । तथा च दर्शयंस्तत्र तत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति । दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिः । तथा मतिपूर्वकामतिपूर्वकादीनां कर्मणां कार्यविशेषस्यारम्भकत्वं दृष्टम् । तथेहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण कर्मापि विदुषोऽकर्म सम्पद्यते । अत उक्तं समग्रं प्रविलीयते
[गीता ४.२३] इति ।

अत्र केचिदाहुः यद्ब्रह्म तदर्पणादीनि । ब्रह्मैव किलार्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म करोति । तत्र नार्पणादिबुद्धिर्निवर्त्यते । किन्त्वर्पणादिषु ब्रह्मबुद्धिराधीयते । यथा प्रतिमादौ विष्ण्वादिबुद्धिः, यथा वा नामादौ ब्रह्मबुद्धिरिति । सत्यमेवमपि स्याद्यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात् । अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान् यज्ञशब्दितान् क्रियाविशेषानुपन्यस्य श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप [गीता ४.३३] इति ज्ञानं स्तौति । अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसम्पादने, अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं
स्यात् । ये त्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृष्टिः क्षिप्यते । नामादिष्विव चेति ब्रुवते, न तेषां ब्रह्मविद्योक्तेह विवक्षिता स्यात् । अर्पणादिविषयत्वाज्ज्ञानस्य । न च दृष्टिसम्पादनज्ञानेन मोक्षफलं प्राप्यते । ब्रह्मैव तेन गन्तव्यमिति चोच्यते ।

विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति । प्रकृतिविरोधश्च । सम्यग्दर्शनं च प्रकृतं कर्मण्यकर्म यः पश्येत्[गीता ४.१८] इत्यत्रान्ते च सम्यग्दर्शनं तस्यैवोपसंहारात् । श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप [गीता ४.३३] ज्ञानं लब्ध्वा परां शान्तिं [गीता ४.३९] इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः । तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णुदृष्टिरुच्यत इत्यनुपपन्नम् । तस्माद्यथाव्याख्यातार्थ एवायं श्लोकः ॥४.२४॥

तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं सम्पाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥४.२५॥

दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते, कुर्वन्तीत्यर्थः । ब्रह्माग्नौ सत्यं ज्ञानमनन्तं ब्रह्म [तैत्तू २.१] विज्ञानमानन्दं ब्रह्म [बृहदारण्यकोपनिषद् ३.९.२८], यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः [बृहदारण्यकोपनिषद् ३.४.१], इत्यादि वचनोक्तमशनायापिपासादिसर्वसंसारधर्मवर्जितं नेति नेति [बृहदारण्यकोपनिषद् ४.४.२२] इति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन् ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्मा आत्मनामसु यज्ञशब्दस्य पाठात्[णिरुक्ति १४.११] तमात्मानं यज्ञं परमार्थतः
परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञिनैवात्मनैवोक्तलक्षणोपजुह्वति प्रक्षिपन्ति, सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं, स तस्मिन् होमस्तं कुर्वन्ति, ब्रह्मात्मैकत्वदर्शननिष्ठाः सन्न्यासिन इत्यर्थः । सोऽयं सम्यग्दर्शनलक्षणो यज्ञो दैवयज्ञादिषु यज्ञेषूपक्षिप्यन्ते ब्रह्मार्पणमित्याद्श्लोकैः प्रस्तुतः श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप [गीता ४.३३] इत्यादिना स्तुत्यर्थम् ॥४.२५॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥४.२६॥

श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम् । संयमा एवाग्नयस्तेषु जुह्वति । इन्द्रियसंयममेव कुर्वन्तीत्यर्थः । शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति, इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥४.२६॥

किं च
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥४.२७॥

सर्वाणीन्द्रियकर्माणि इन्द्रियाणां कर्माणीन्द्रियकर्माणि । तथा प्राणकर्माणि प्राणो वायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि चापर आत्मसंयमयोगाग्नौ, आत्मनि संयम आत्मसंयमः । स एव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति । ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते प्रविलापयन्तीत्यर्थः ॥४.२७॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥४.२८॥

द्रव्ययज्ञास्तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः । तपोयज्ञास्तपो यज्ञो येषां तपस्विनां ते तपोयज्ञाः । योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञाः । तथापरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायो यथाविधि ऋगाद्यभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः । ज्ञानयज्ञा ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः । स्वाध्याययज्ञा ज्ञानयज्ञाश्च यतयो यतनशीलाः । शंसितव्रताः सम्यक्शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते
संशितव्रताः ॥४.२८॥

किं च
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥४.२९॥

अपानेऽपानवृत्तौ जुह्वति प्रतिक्षिपन्ति प्राणं प्राणवृत्तिं, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथापरे जुह्वति । रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत् । प्राणापानगती मुख्यनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिस्तद्विपर्ययेणाधोगमनमपानस्य गतिस्, ते प्राणापानगती । एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥४.२९॥

किं च

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥४.३०॥

अपरे नियताहारा नियतः परिमित आहारो येषां ते नियताहाराः सन्तः, प्राणान् वायुभेदान् प्राणेष्वेव जुह्वति । यस्य यस्य वायोर्जयः क्रियत इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति, ते तत्र प्रविष्टा इव भवन्ति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा यज्ञैर्यथोक्तैः क्षपितो नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः ॥४.३०॥

एवं यथोक्तान् यज्ञान्निर्वर्त्य

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥४.३१॥

यज्ञशिष्टामृतभुजो यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तदमृतं च यज्ञशिष्टामृतं तद्भुञ्जत इति यज्ञशिष्टामृतभुजः। यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितमन्नममृताख्यं भुञ्जते इति यज्ञशिष्टामृतभुजो यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत्। कालातिक्रमापेक्षयेति सामर्थ्याद्गम्यते। नायं लोकः सर्वप्राणिसाधारणोऽप्यस्ति यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्य। कुतोऽन्यो विशिष्टसाधनसाध्यः कुरुसत्तम॥४.३१॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे॥४.३२॥

एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेण अवगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते। तद्यथा वाचि हि प्राणं जुहुमः इत्यादयः। कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि तान् सर्वाननात्मजान्, निर्व्यापारो ह्यात्मा। अत एवं ज्ञात्वा विमोक्ष्यसेऽशुभात्। न मद्व्यापारा इमे, निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वास्मात्सम्यग्दर्शनान्मोक्ष्यसे संसारबन्धनादित्यर्थः॥४.३२॥

ब्रह्मार्पणम् [गीता ४.२४] इत्यादि लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितम्। यज्ञाश्चानेक उपदिष्टाः। तैः सिद्धपुरुषार्थप्रयोजनैर्ज्ञानं स्तूयते। कथम्?

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते॥४.३३॥

श्रेयान् द्रव्यमयात्द्रव्यसाधनसाध्याद्यज्ञाज्ज्ञानयज्ञो हे परंतप। द्रव्यमयो हि यज्ञः फलस्यारम्भकः, ज्ञानयज्ञो न फलारम्भकः, अतः श्रेयान् प्रशस्यतरः। कथम्? यतः सर्वं कर्म समस्तमखिलमप्रतिबद्धं पार्थ ज्ञाने मोक्षसाधने सर्वतः संप्लुतोदकस्थानीये परिसमाप्यते अन्तर्भवतीत्यर्थः। यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद [Cहाऊ ४.१.४] इति श्रुतेः॥ ४.३३॥

तदेतद्विशिष्टां ज्ञानं तर्हि केन प्राप्यत इत्युच्यते

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥४.३४॥

तत्विद्धि विजानीहि येन विधिना प्राप्यते इति। आचार्यानभिगम्य, प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन। कथं बन्धः? कथं मोक्षः? का विद्या? का चाविद्या? इति परिप्रश्नेन, सेवया गुरुशुश्रूषया एवमादिना। प्रश्रयेणावर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनः। ज्ञानवन्तोऽपि केचिद्यथावत्तत्त्वदर्शनशीलाः, अपरे न। अतो विशिनष्टि तत्त्वदर्शिन इति। ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति। नेतरदिति भगवतो मतम्॥४.३४॥

तथा च सतीदमपि समर्थं वचनम्

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥४.३५॥

यज्ज्ञात्वा यज्ज्ञानं तैरुपदिष्टमधिगम्य प्राप्य पुनर्भूयो मोहमेवं यथेदानीं मोहं गतोऽसि पुनरेवं न यास्यसि हे पाण्डव। किं च येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षादात्मनि प्रत्यगात्मनि मत्संस्थानीमानि भूतानीत्यथो अपि मयि वासुदेवे परमेश्वरे

चेमानीति। क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥४.३५॥

किं चैतस्य ज्ञानस्य माहात्म्यम्

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥४.३६॥

अपि चेदसि पापेभ्यः पापकृद्भ्यः सर्वेभ्योऽतिशयेन पापकृत्पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापसमुद्रं संतरिष्यसि। धर्मोऽपीह मुमुक्षोः पापमुच्यते ॥४.३६॥

ज्ञानं कथं नाशयति पापम् ? इति सदृष्टान्तमुच्यते

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥४.३७॥

यथैधांसि काष्ठानि समिद्धः सम्यगिद्धो दीप्तोऽग्निर्भस्मसात्भस्मीभावं कुरुते हे अर्जुन, ज्ञानमेव अग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा निर्बीजीकरोतीत्यर्थः। न हि साक्षादेव ज्ञानाग्निः कर्माणीन्धनवत्भस्मीकर्तुं शक्नोति। तस्मात्सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणमित्यभिप्रायः। सामर्थ्याद्येन कर्मणा अरीरमारब्धं तत्प्रवृत्तफलत्वादुपभोगेनैव क्षीयते। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये [Cहाऊ ६.१४.१] अतो यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक्कृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात्कुरुते ॥४.३७॥

यतः एवमतः

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥४.३८॥

न हि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते। तज्ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नः सन्मुमुक्षुः कालेन महता आत्मनि विन्दति लभते इत्यर्थः ॥४.३८॥

येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥४.३९॥

श्रद्धावान् श्रद्धालुर्लभते ज्ञानम्। श्रद्धालुत्वेऽपि भवति कश्चिन्मन्दप्रस्थानः, अत आह तत्परः। गुरूपासदनादावभियुक्तो ज्ञानलब्ध्युपाये श्रद्धावान्। तत्परोऽप्यजितेन्द्रियः स्यातित्यत आह संयतेन्द्रियः। संयतानि विषयेभ्यो निवर्तितानि यस्येन्द्रियाणि स संयतेन्द्रियः। य एवंभूतः श्रद्धावान् तत्परः संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते। प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति, मायावित्वादिसंभवात्। न तु तत्श्रद्धावत्त्वादौ इत्येकान्ततो ज्ञानलब्ध्युपायः। किं पुनर्ज्ञानलाभात्स्यादित्युच्यते ज्ञानं लब्ध्वा परं मोक्षाख्यां शान्तिम्
उपरतिमचिरेण क्षिप्रमेवाधिगच्छति। सम्यग्दर्शनात्क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः ॥४.३९॥

अत्र संशयो न कर्तव्यः, पापिष्ठो हि संशयः । कथमित्युच्यते

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४.४०॥

अज्ञश्चानात्मज्ञश्चाश्रद्दधानश्च गुरुवाक्यशास्त्रेष्वविश्वासवांश्च संशयात्मा च संशयचित्तश्च विनश्यति । अज्ञाश्रद्दधानौ यद्यपि विनश्यतः, न तथा यथा संशयात्मा । संशयात्मा तु पापिष्ठः सर्वेषाम् । कथम् ? नायं साधारणोऽपि लोकोऽस्ति । तथा न परो लोकः । न सुखम्, तत्रापि संशयोत्पत्तेः संशयात्मनः संशयचित्तस्य । तस्मात्संशयो न कर्तव्यः ॥४.४०॥

कस्मात्?

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४.४१॥

योगसंन्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसंन्यस्तकर्माणम् । कथं योगसंन्यस्तकर्मा ? इत्याह ज्ञानसंछिन्नसंशयं ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो यस्य यो ज्ञानसंछिन्नसंशयः । य एवं योगसंन्यस्तकर्मा तमात्मवन्तमप्रमत्तं गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्त्यनिष्टादिरूपं फलं नारभन्ते । हे धनंजय ॥४.४१॥

यस्मात्कर्मयोगानुष्ठानादशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्मभिर्ज्ञानाग्निदग्धकर्मत्वादेव, यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान् विनश्यति

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४.४२॥

तस्मात्पापिष्ठमज्ञानसंभूतमज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिना आत्मनः स्वस्य, आत्मविषयत्वात्संशयस्य । न हि परस्य संशयः परेण च्छेत्तव्यतां प्राप्तः, येन स्वस्येति विशेष्येत । अत आत्मविषयोऽपि स्वस्यैव भवति । छित्त्वा एनं संशयं स्वविनाशहेतुभूतम्, योगं सम्यग्दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः । उत्तिष्ठ चेदानीं युद्धाय भारत
इति ॥४.४२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
चतुर्थोऽध्यायः
॥४॥

# पञ्चमोऽध्यायः

अर्जुन उवाच

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥५.१॥

संन्यासं परित्यागं कर्मणामास्त्रीयाणामनुष्ठेयविशेषाणां शंससि प्रशंससि कथयसीत्येतत् । पुनर्योगं च तेषामेव अनुष्ठानमवश्यकर्तव्यं शंससि । अतो मे कतरत्श्रेयः इति संशयः किं कर्मानुष्ठानं श्रेयः, किं वा तद्धानमिति । प्रशस्यतरं चानुष्ठेयम् । अतश्च यत्श्रेयः प्रशस्यतरमेतयोः कर्मसंन्यासकर्मयोगयोर्यदनुष्ठानात्श्रेयोऽवाप्तिर्मम स्यादिति मन्यसे, तदेकमन्यतरत्सह एकपुरुषानुष्ठेयत्वासंभवात्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥५.१॥

ओ)O(ओ

स्वाभिप्रायमाचक्षाणो निर्णयाय श्रीभगवानुवाच

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥५.२॥

संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेन । उभौ यद्यपि निःश्रेयसकरौ, तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात्केवलात्कर्मयोगो विशिष्यत इति कर्मयोगं स्तौति ॥५.२॥

ओ)O(ओ

कस्मातिति आह

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥५.३॥

ज्ञेयो ज्ञातव्यः स कर्मयोगी नित्यसंन्यासी इति यो न द्वेष्टि किंचित्न काङ्क्षति दुःखसुखे तत्साधने च । एवंविधो यः, कर्मणि वर्तमानोऽपि स नित्यसंन्यासी इति ज्ञातव्य इत्यर्थः । निर्द्वन्द्वो द्वन्द्ववर्जितो हि यस्मात्महाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥५.३॥

ओ)O(ओ

संन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तः । न तूभयोर्निःश्रेयसकरत्वमेवेति प्राप्त इदमुच्यते

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥५.४॥

सांख्ययोगौ पृथग्विरुद्धभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः । पण्डितास्तु ज्ञानिन एकं फलमविरुद्धमिच्छन्ति । कथम् ? एकमपि सांख्ययोगयोः सम्यगास्थितः सम्यगनुष्ठितवानित्यर्थः, उभयोर्विन्दते फलम् । उभयोस्तदेव हि निःश्रेयसं फलम् । अतो न फले विरोधोऽस्ति ।

ननु संन्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति ? नैष दोषः यद्यप्यर्जुनेन संन्यासं कर्मयोगं च केवलमभिप्रेत्य प्रश्नः कृतः । भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ सांख्ययोगाविति । तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतम् । अतो न अप्रकृतप्रक्रियेति ॥५.४॥

ओ)O(ओ

एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं विन्दते ? इत्युच्यते

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥५.५॥

यत्सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माण्यात्मनः फलमनभिसंधायानुतिष्ठन्ति ये ते योगा योगिनः । तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यत इत्यभिप्रायः । अत एकं साङ्ख्यं च योगं च यः पश्यति फलैकत्वात्स पश्यति सम्यक्पश्यतीत्यर्थः ॥५.५॥

ओ)O(ओ

एवं तर्हि योगात्संन्यास एव विशिष्यते । कथं तर्हीदमुक्तं तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते [गीता ५.२] इति ? सृणु तत्र कारणम् त्वया पृष्टां केवलं कर्मसंन्यासं कर्मयोगं चाभिप्रेत्य तयोरन्यतरः कः श्रेयान् ? इति । तदनुरूपं प्रतिवचनं मयोक्तं कर्मसंन्यासात्कर्मयोगो विशिष्यते इति ज्ञानमनपेक्ष्य । ज्ञानापेक्षस्तु संन्यासः सांख्यमिति मयाभिप्रेतः । परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिकः स च तादर्थ्यात्योगः संन्यास इति चोपचर्यते । कथं
तादर्थ्यम् ? इत्युच्यते

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥५.६॥

संन्यासस्तु पारमार्थिको दुःखमाप्तुं प्राप्तुमयोगतो योगेन विना । योगयुक्तो वैदिकेन कर्मयोगेन वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तो मुनिः । मननादीश्वरस्वरूपस्य मुनिः । ब्रह्म परमात्मज्ञाननिष्ठालक्षणत्वात्प्रकृतः संन्यासो ब्रह्मोच्यते । न्यास इति ब्रह्मा ब्रह्मा हि परः [ ़हानारू ७८] इति श्रुतेः । ब्रह्म परमार्थसंन्यासं परमार्थज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेवाधिगच्छति प्राप्नोति । अतो मयोक्तं कर्मयोगो विशिष्यत इति ॥५.६॥
यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥५.७॥

योगेन युक्तो योगयुक्तो विशुद्धात्मा विशुद्धसत्त्वो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः । स तत्रैवं वर्तमानो लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिर्बध्यते इत्यर्थः ॥५.७॥
न चासौ परमार्थतः करोतीत्यतः

नैव किं चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्श्वसन् ॥५.८॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥५.९॥

युक्तः समाहितः सन्मन्येत चिन्तयेत् । तत्त्वविदात्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित्परमार्थदर्शीत्यर्थः । कदा कथं वा तत्त्वमवधारयन्मन्येत ? इत्युच्यते । मन्येतेति पूर्वेण संबन्धः । यस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मस्वकर्मैव पश्यतः सम्यग्दर्शिनस्तस्य सर्वकर्मसंन्यास एवाधिकारः कर्मणोऽभावदर्शनात् । न हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥५.८९॥

यस्तु पुनरतत्त्ववित्प्रवृत्तश्च कर्मयोगे

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥५.१०॥

ब्रह्मणीश्वर आधाय निक्षिप्य तदर्थं कर्म करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि । मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते पद्मपत्रमिवाम्भसोदकेन ॥५.१०॥
केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य कर्मणः स्यात्, यस्मात्

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥५.११॥

कायेन देहेन मनसा बुद्ध्या च केवलैर्ममत्ववर्जितैः ईश्वरायैव कर्म करोमि, न मम फलाय इति ममत्वबुद्धिशून्यैरिन्द्रियैरपि केवलशब्दः

कायादिभिरपि प्रत्येकं संबध्यते, सर्वव्यापारेषु ममतावर्जनाय । योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्त्वशुद्धय इत्यर्थः । तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव ॥५.११॥

यस्माच्च

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥५.१२॥

युक्त ईश्वराय कर्मणि करोमि न मम फलाय इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः । यस्तु पुनरयुक्तोऽसमाहितः कामकारेण । करणं कारः कामस्य कारः कामकारः । तेन कामकारेण कामप्रेरिततयेत्यर्थः । मम फलाय इदं करोमि कर्म इत्येवं फले सक्तो निबध्यते । अतस्त्वं युक्तो भव इत्यर्थः ॥५.१२॥
यस्तु परमार्थदर्शी सः

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥५.१३॥

सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च । तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या, कर्मादावकर्मसन्दर्शनेन संत्यज्येत्यर्थः । आस्ते तिष्ठति सुखम् । त्यक्तवाङ्मनःकायचेष्टो निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तसर्वबाह्यप्रयोजन इति सुखमास्ते इत्युच्यते । वशी जितेन्द्रिय इत्यर्थः । क्व कथमास्ते ? इत्याह नवद्वारे पुरे । सप्त शीर्षण्यान्यात्मन उपलब्धिद्वाराणि, अर्वाक्द्वे मूत्रपुरीषविसर्गार्थे, तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरम् । आत्मैकस्वामिकम्, तदर्थप्रयोजनैश्च इन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः
पौरैरिवाधिष्ठितम् । तस्मिन्नवद्वारे पुरे देही सर्वं कर्म संन्यस्यास्ते ।

किं विशेषणेन ? सर्वो हि देही संन्यास्यसंन्यासी वा देहे एवास्ते । तत्रानर्थकं विशेषणमिति । उच्यते यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वाऽऽस इति मन्यते । न हि देहमात्रात्मदर्शिनो गेह इव देहे आस इति प्रत्ययः संभवति । देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देहे आसे इति प्रत्यय उपपद्यते । परकर्मणां च परस्मिन्नात्मन्यविद्यययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते । उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुर आसनम् । प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः ।
देहे एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् ।

यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि संन्यस्यास्ते इत्युक्तम्, तथापि आत्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यातित्याशङ्क्याह नैव कुर्वन् स्वयं न कार्यकरणानि कारयन् क्रियासु प्रवर्तयन् । किं ? यत्तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत्संन्यासान्न संभवति ? यथा गच्छतो गतिर्गमनव्यापारपरित्यागे न स्यात्तद्वत्? किं वा स्वत एव आत्मनो नास्ति इति ? अत्रोच्यते नास्त्यात्मनः स्वतः कर्तृत्वं कारयितृत्वं च । उक्तं हि अविकार्योऽयमुच्यते [गीता २.५५], शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते [गीता ३.२८] इति । ध्यायतीव लेलायतीव [बृहदारण्यकोपनिषद् ४.३.७] इति च श्रुतेः ॥५.१३॥
ओ)O(ओ

किं च

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥५.१४॥

न कर्तृत्वं स्वतः कुर्विति नापि कर्माणि रथघटप्रासादादीनीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा । नापि रथादि कृतवतस्तत्फलेन संयोगं न कर्मफलसंयोगम् । यदि किंचिदपि स्वतो न करोति न कारयति च देही, कस्तर्हि कुर्वन् कारयन् च प्रवर्तत इति, उच्यते स्वभावस्तु स्वो भावः स्वभावोऽविद्यालक्षणा प्रकृतिर्माया प्रवर्तते दैवी हि [गीता ७.१४] इत्यादिना वक्ष्यमाणा ॥५.१४॥

परमार्थतस्तु

नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥५.१५॥

नादत्ते न च गृह्णाति भक्तस्यापि कस्यचित्पापम् । न चैवादत्ते सुकृतं भक्तैः प्रयुक्तं विभुः । किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यते इत्याह अज्ञानेनावृतं ज्ञानं विवेकविज्ञानम्, तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥५.१५॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥५.१६॥

ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवस्ततज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितमात्मनो भवति, तेषां जन्तूनामादित्यवत्यथादित्यः समस्तं रूपजातमवभासयति तद्वत्ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत्परं परमार्थतत्त्वम् ॥५.१६॥

यत्परं ज्ञानं प्रकाशितम्

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥५.१७॥

तस्मिन् ब्रह्मणि गता बुद्धिर्येषां ते तद्बुद्धयः, तदात्मानस्तदेव परं ब्रह्म आत्मा येषां ते तदात्मनाः, तन्निष्ठाः निष्ठा अभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः, तत्परायणा च तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः । येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते गच्छन्ति एवंविद्याः अपुनरावृत्तिमपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषा यथोक्तेन ज्ञानेन निर्धूतो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा यतयः इत्यर्थः ॥५.१७॥

ओ)O(ओ

येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्त्वं पयन्तीत्युच्यते

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥५.१८॥

विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विनय उपामः, ताभ्यां विद्याविनयाभ्यां संपन्नो विद्याविनयसंपन्नो विद्वान् विनीतश्च यो ब्राह्मणस्तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः । विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि, संस्कारहीनायामत्यन्तमेव केवलतामसे हस्त्यादौ च, सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टां सममेकमविक्रियं तद्ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः
समदर्शिनः ॥५.१८॥

ओ)O(ओ

नन्वभोज्यान्नास्ते दोषवन्तः, समासमाभ्यां विषमसमे पूजातः [ग्ौतमधर्मसूत्र २.८.२०] इति स्मृतेः । न ते दोषवन्तः । कथम् ?

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥५.१९॥

इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वईकृतः सर्गो जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं नि चलीभूतं मनोऽन्तःकरणम् । निर्दोषं यद्यपि दोषवत्सु वपाकादिषु मूढैस्तद्दोषैर्दोषवतिव विभाव्यते, तथापि तद्दोषैरस्पृष्टामिति निर्दोषं दोषवर्जितं हि यस्मात् । नापि स्वगुणभेदभिन्नम्, निर्गुणत्वाच्चैतन्यस्य । वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वम्, अनादित्वान्निर्गुणत्वातिति च । नाप्यन्त्या विशेषाः आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां
सत्त्वे प्रमाणानुपपत्तेः । अतः समं ब्रह्म एकं च । तस्मात्ब्रह्मणि एव ते स्थिताः । तस्मात्न दोषगन्धमात्रमपि तान् स्पृअति, देहादिसंघातात्मदर्शनाभिमानाभावात्तेषाम् । देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत्सूत्रं समासमाभ्यां विषमसमे पूजातः इति,

पूजाविषयत्वेन विशेषणात् । दृश्यते हि ब्रह्मवित्षडाङ्गवित्चतुर्वेदवितिति पूजादानादौ गुणविशेषसंबन्धः कारणम् । ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितमित्यतर्ब्रह्मणि ते स्थिताः इति युक्तम् । कर्मविषयं च समासमाभ्यामित्यादि । इदं
तु सर्वकर्मसंन्यासविषयं प्रस्तुतम्, सर्वकर्माणि मनसा इत्यारभ्य आध्यायपरिसमाप्तेः ॥५.१९॥

ओ)O(ओ

यस्मात्निर्दोषं समं ब्रह्मात्मा, तस्मात्

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥५.२०॥

न प्रहृषेयेत्प्रहर्षं न कुर्यात्प्रियमिष्टां प्राप्य लब्ध्वा । नोद्विजेत्प्राप्य चाप्रियमनिष्टां लब्ध्वा । देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसंभवात् । किं च सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्यात्यथोक्तब्रह्मविद्ब्रह्मणि स्थितोऽकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥५.२०॥

ओ)O(ओ

किं च, ब्रह्मणि स्थितः

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥५.२१॥

बाह्यस्पर्शेषु बाह्या च ते स्पर्शाश्च बाह्यस्पर्शाः । स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेषु । असक्त आत्मा अन्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते । आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन् व्यापृत आत्मा अन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा । सुखमक्षयमश्नुते व्याप्नोति । तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥५.२१॥

ओ)O(ओ

इतश्च निवर्तयेत्

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥५.२२॥

ये हि यस्मात्संस्स्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव ते, अविद्याकृतत्वात् । दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । यथा इहलोके तथा परलोकेऽपीति गम्यते एवशब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत् । न केवलं दुःखयोनय एव, आद्यन्तवन्तश्च, आदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोग एव । अतः आद्यन्तवन्तोऽनित्याः, मध्यक्षणभावित्वातित्यर्थः । कौन्तेय, न तेषु भोगेषु रमते बुधो विवेक्यवगतपरमार्थतत्त्वः । अत्यन्तमूढानामेव हि विषयेषु
रतिर्दृश्यते, यथा पशुप्रभृतीनाम् ॥५.२२॥

ओ)O(ओ

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान्

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥५.२३॥

शक्नोत्युत्सहत इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणाता मरणातित्यर्थः । मरणसीमाकरणं जीवतोऽवयंभावि हि

कामक्रोधोद्भवो वेगः, अनन्तनिमित्तवान् हि सः इति यावत्मरणं तावत्न विस्राम्भणीय इत्यर्थः । कामः इन्द्रियगोचरप्राप्ते इष्टो विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या गङ्धस्तृष्णा स कामः । क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृयमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधः । तौ कामक्रोधावुद्भवो यस्य वेगस्य स
कामक्रोधोद्भवो वेगः । रोमाञ्चनप्रहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः । गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः । तं कामक्रोधोद्भवं वेगं य उत्सहते प्रसहते सोढुं प्रसहितुम्, सो युक्तो योगी सुखी चेह लोके नरः ॥ ॥५.२३॥

ओ)O(ओ

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोति ? इत्याह भगवान्

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥५.२४॥

योऽन्तःसुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखः, तथान्तरेवात्मन्याराम आरमणमाक्रीडा यस्य सोऽन्तरारामः । तथैवान्तरेव आत्मन्येव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव, य ईदृशः सो योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति ॥५.२४॥

ओ)O(ओ

किं च

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥५.२५॥

लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापा निर्दोषाश्छिन्नद्वैधाः छिन्नसंशया यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हिते आनुकूल्ये रता अहिंसका इत्यर्थः ॥५.२५॥

ओ)O(ओ

किं च

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥५.२६॥

कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानामभित उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मनां तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥५.२६॥

ओ)O(ओ
सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदेऽब्रवीत्, वक्ष्यति च । अथेदानीं ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयान् श्लोकानुपदिशति स्म

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥५.२७॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥५.२८॥

स्पर्शान् शब्दादीन् कृत्वा बहिर्बाह्यान् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतो शब्दादयो बाह्या बहिरेव कृता भवन्ति

। तानेवं बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा । यतेन्द्रियमनोबुद्धिर्यतानि संयतानीन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिः । मननात्मुनिः संन्यासी । मोक्षपरायण एवं देहसंस्थानान्मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत् । विगतेच्छाभयक्रोध इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्
ते विगताः यस्मात्स विगतेच्छाभयक्रोधः । य एवं वर्तते सदा संन्यासी, मुक्त एव सः । न तस्य मोक्षोऽन्यः कर्तव्योऽस्ति ॥

ओ)O(ओ

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥५.२९॥
एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते । भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥५.२९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ॥५॥

## षष्ठोऽध्यायः

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान् कृत्वा बहिः [गीता ५.२७] इत्यादय उपदिष्टः । तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते । तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणसमर्थस्तावद्गृहस्थेनाधिकृतेन कर्तव्यं कर्म इत्यतस्तत्स्तौति ।

ननु किमर्थं ध्यानयोगारोहणसीमाकरणम्, यावतानुष्ठेयमेव विहितं कर्म यावज्जीवम् । न, आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते [गीता ३.३] इति विशेषणात् । आरूढस्य च शमेनैव संबन्धकरणात् । आरुरुक्षोरारूढस्य च शमः कर्मश्चोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदारुरुक्षोरारूढस्य चेति शमकर्मविषयभेदेन विशेषणं विभागकरणं चानर्थकं स्यात् ।

तत्राश्रमिणां कश्चिद्योगमारुरुक्षुर्भवति । आरूढश्च कश्चित् । अन्ये नारुरुक्षवः । न चारूढाः । तानपेक्ष्यारुरुक्षोरारूढस्य चेति विशेषणं विभागकरणं चोपपद्यत एवेति चेत्, न । तस्यैवेति वचनात् । पुनर्योगग्रहणाच्च योगारूढस्येति । य आसीत्पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शम एव कर्तव्यः । कारणं योगफलं प्रत्युच्यतेति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः । योगविभ्रष्टवचनाच्च ।

गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये, स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशङ्कानुपपन्ना स्यात् । अवश्यं हि कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वे स्वं फलमारभत एव । नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचाम । अन्यथा वेदस्यानर्थार्थत्वप्रसङ्गादिति ।

न च कर्मणि सत्युभयविभ्रष्टवचनमर्थवत् । कर्मणो विभ्रंशकारणानुपपत्तेः । कर्म कृतमीश्वरे संन्यस्येत्यतः कर्तरि कर्म फलं नारभतेति चेन्, न । ईश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेः । मोक्षायैवेति चेत्, स्वकर्मणां कृतानामीश्वरे न्यासो मोक्षायैव, न फलान्तराय योगसहितः ।

योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशशङ्का युक्तैवेति चेत्, न । एकाकी यतचित्तात्मा निराशीरपरिग्रहः [गीता ६.१०] ब्रह्मचारिव्रते स्थितः [गीता ६.१४] इति कर्मसंन्यासविधानात् । न चात्र गृहस्थस्य निराशीरपरिग्रहः इत्यादिवचनमनुकूलम् । उभयविभ्रष्टप्रश्नानुपपत्तेश्च ।

अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं चोक्तम्, प्रतिषिद्धं च निरग्नेः अक्रियस्य च संन्यासित्वं योगित्वं चेति चेत्, न । ध्यानयोगं प्रति बहिरङ्गस्य सतः कर्मणः फलाकाङ्क्षासंन्यासस्तुतिपरत्वात् ।

न केवलं निरग्निरक्रिय एव संन्यासी योगी च । किं तर्हि ? कर्म्यपि, कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन् सत्त्वशुद्ध्यर्थं, स संन्यासी च योगी च भवतीति स्तूयते । न चैकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते । न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान् । स्ववचनविरोधाच्च सर्वकर्माणि मनसा संन्यस्य... नैव कुर्वन्न कारयनास्ते [गीता ५.१३] मौनी संतुष्टो येन केनचित्... अनिकेतः स्थिरमतिः
[गीता १२.१९] विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः [गीता २.७१] सर्वारम्भपरित्यागी [गीता १२.१६] इति च तत्र तत्र भगवता

स्ववचनानि दर्शितानि । तैर्विरुध्येतश्चतुर्थाश्रमप्रतिषेधः । तस्मान्मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिकर्म फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति स संन्यासी च योगी चेति स्तूयते

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥६.१॥

अनाश्रितो नाश्रितोऽनाश्रितः । किम् ? कर्मफलं कर्मणां फलं कर्मफलं यत्तदनाश्रितः, कर्मफलतृष्णारहित इत्यर्थः । यो हि कर्मफले तृष्णावान् स कर्मफलमाश्रितो भवति । अयं तु तद्विपरीतः, अतोऽनाश्रितः कर्मफलम् । एवंभूतः सन् कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं कर्म करोति निर्वर्तयति । यः कश्चिदीदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यते । इत्येवमर्थमाह स संन्यासी च योगी चेति । संन्यासः परित्यागः स यस्यास्ति स संन्यासी च योगी च । योगश्चित्तसमाधानं
स यस्यास्ति स योगी चेति एवंगुणसंपन्नोऽयं मन्तव्यः । न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः । निर्गताः अग्नयः कर्माङ्गभूता यस्मात्स निरग्निः । अक्रियश्चानग्निसाधनाप्यविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः ॥६.१॥

ननु च निरग्नेः अक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम् । कथमिह साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं चाप्रसिद्धमुच्यत इति । नैष दोषः, कयाचिद्गुणवृत्त्या उभयस्य संपिपादयिषितत्वात् । तत्कथम् ? कर्मफलसंकल्पसंन्यासात्संन्यासित्वम्, योगाङ्गत्वेन च कर्मानुष्ठानात्कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागाद्योगित्वं चेति गौणमुभयम् । न पुनर्मुख्यं संन्यासित्वं योगित्वं चाभिप्रेतमित्येतमर्थं दर्शयितुमाह

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥६.२॥

यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासमिति प्राहुः श्रुतिस्मृतिविदः, योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डाव । कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यते इत्यपेक्षायामिदमुच्यते अस्ति हि परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य । यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं
प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यतीति । एतमर्थं दर्शयिष्यन्नाह न हि यस्मादसंन्यस्तसंकल्पोऽसंन्यस्तोऽपरित्यक्तः सङ्कल्पोऽभिसन्धिर्येन सोऽसंन्यस्तसङ्कल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति । न संभवतीत्यर्थः । फलसंकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्माद्यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेत् । चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वाद्
इत्यभिप्रायः । योगाङ्गत्वेन कर्मानुष्ठानात्कर्मफलसङ्कल्पस्य वा चित्तविक्षेपहेतोः परित्यागात्योगित्वं चेति संन्यासित्वं चेत्यभिप्रेतमुच्यते । [*ण्Oट्E ठिस्लस्त्सेन्तेन्चे नोत्fओउन्दिनल्लेदितिओन्स्.] ॥६.२॥

एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डाव [गीता ६.२] इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम् । ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वाधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥६.३॥

आरुरुक्षोरारोढुमिच्छतः, अनारूढस्य, ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः । कस्य तस्यारुरुक्षोः ? मुनेः, कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षोः ? योगम् । कर्म कारणं साधनमुच्यते । योगारूढस्य पुनस्तस्यैव शमरुपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढस्य साधनमुच्यते इत्यर्थः । यावद्यावत्कर्मभ्य उपरमते, तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्तं व्यासेन

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं

ततस्ततश्चोपरमः क्रियाभ्यः ॥ [म.भा. १२.१७५.३७] इति ॥६.३॥

अथेदानीं कदा योगारूढो भवतीत्युच्यते

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥६.४॥

यदा समाधीयमानचित्तो योगी हीन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसंकल्पसंन्यासी सर्वान् संकल्पानिहामुत्रार्थकामहेतून संन्यसितुं शीलमस्येति सर्वसंकल्पसंन्यासी । योगारूढः प्राप्तयोग इत्येतत्, तदा तस्मिन् काल उच्यते । सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान् सर्वाणि च कर्माणि संन्यस्येदित्यर्थः । संकल्पमूला हि सर्वे कामाः
संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः [ंनु २.३]

काम जानामि ते मूलं संकल्पात्त्वं हि जायसे ।
न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि ॥ [म.भा. १२.१७७.२५] इत्यादिस्मृतेः ।

सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति । स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते [बृहदारण्यकोपनिषद् ४.४.५] इत्यादि श्रुतिभ्यः । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् [ंनु २.४] इत्यादिस्मृतिभ्यश्च । न्यायाच्च न हि सर्वसंकल्पसंन्यासे कश्चित्स्पन्दितुमपि शक्तः । तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान् ॥६.४॥

यदैवं योगारूढः, तदा तेन आत्मा उद्धृतो भवति संसारादनर्थजातात् । अतः

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥६.५॥

उद्धरेत्संसारसागरे निमग्नमात्मनात्मानं तत उत्पूर्ध्वं हरेदुद्धरेत्, योगारूढतामापादयेदित्यर्थः । नात्मानमवसादयेत्नाधो नयेत, नाधो गमयेत् । आत्मैव हि यस्मादात्मनो बन्धुः । न ह्यन्यः कश्चित्बन्धुः, यः संसारमुक्तये भवति । बन्धुरपि तावत्मोक्षं प्रति प्रतिकूल एव, स्नेहादिबन्धनायतनत्वात् । तस्मात्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति । आत्मैव रिपुः शत्रुः । योऽन्योऽपकारी बाह्यः शत्रुः सोऽपि आत्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥६.५॥

आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तम् । तत्र किंलक्षण आत्मा आत्मनो बन्धुः, किंलक्षणो वा आत्मात्मनो रिपुरित्युच्यते

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६.६॥

बन्धुरात्मात्मनस्तस्य, तस्यात्मनः स आत्मा बन्धुर्येनात्मनात्मैव जितः । आत्मा कार्यकरणसंघातो येन वशीकृतः, जितेन्द्रिय इत्यर्थः । अनात्मनस्त्वजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेत आत्मैव शत्रुवत्, यथानात्मा शत्रुरात्मनोऽपकारी, तथात्मा आत्मनोऽपकारे वर्तेत इत्यर्थः ॥ ६.६॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥६.७॥

जितात्मनः कार्यकरणसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः, प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तते इत्यर्थः । किं च शीतोष्णसुखदुःखेषु तथा मानेऽपमाने च मानापमानयोः पूजापरिभवयोः समः स्यात् ॥६.७॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥६.८॥

ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम्, ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्ययः आत्मान्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा, कूटास्थोऽप्रकम्प्यः, भवतीत्यर्थः । विजितेन्द्रियश्च । य ईदृशः, युक्तः समाहित इति स उच्यते कथ्यते । स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः ॥६.८॥

किं च

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥६.९॥

सुहृदित्यादि लोकार्धमेकं पदम् । सुहृतिति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनो न कस्यचित्पक्षं भजते, मध्यस्थो यो विरुद्धयोरुभयोः हितैषी, द्वेष्य आत्मनोऽप्रियः, बन्धुः संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः । कः किंकर्मा इत्यव्यापृतबुद्धिरित्यर्थः । विशिष्यते, विमुच्यते इति वा पाठान्तरम् । योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥६.९॥

अत एवमुत्तमफलप्राप्तये

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥६.१०॥

योगी ध्यायी युञ्जीत समादध्यात्सततं सर्वदात्मानमन्तःकरणं रहसि एकान्ते गिरिगुहादौ स्थितः सनेकाकी असहायः । रहसि स्थितः एकाकी चेति विशेषणात्संन्यासं कृत्वा इत्यर्थः । यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा, निराशीर्वीततृष्णोऽपरिग्रहः परिग्रहरहितश्चेत्यर्थः । संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः ॥६.१०॥

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते । तत्रासनमेव तावत्प्रथममुच्यते

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥६.११॥

शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातीव उच्छ्रितं नाप्यतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरम् । पाठक्रमाद्विपरीतोऽत्र क्रमश्चैलादीनाम् ॥ ६.११॥

प्रतिष्ठाप्य, किम् ?

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥६.१२॥

तत्र तस्मिन्नासन उपविश्य योगं युञ्ज्यात् । कथम् ? सर्वविषयेभ्य उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियश्चित्तं चेन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य स यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याह आत्मविशुद्धयेऽन्तःकरणस्य विशुद्ध्यर्थमित्येतत् ॥६.१२॥

बाह्यमासनमुक्तम् । अधुना शरीरधारणं कथमित्युच्यते

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥६.१३॥

समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं धारयनचलं च । समं धारयतश्चलनं संभवति । अतो विशिनष्टि अचलमिति । स्थिरः स्थिरो भूत्वा इत्यर्थः । स्वं नासिकाग्रं संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वैवेति । इवशब्दो लुप्तो द्रष्टव्यः । न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम् । किं तर्हि ? चक्षुषो दृष्टिसंनिपातः । स चान्तःकरणसमाधानापेक्षो विवक्षितः । स्वनासिकाग्रसंप्रेक्षणम्
एव चेद्विवक्षितम्, मनस्तत्रैव समाधीयेत, नात्मनि । आत्मनि हि मनसः समाधानं वक्ष्यति आत्मसंस्थं मनः कृत्वेति । तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्य इत्युच्यते । दिशश्चानवलोकयन् दिशां चावलोकनमन्तरा कुर्वनित्येतत् ॥६.१३॥

किं च

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥६.१४॥

प्रशान्तात्मा प्रकर्षेण शान्तः आत्मान्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः, ब्रह्मचारिव्रते स्थितः । ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः । तदनुष्ठाता भवेदित्यर्थः । किं च, मनः संयम्य मनसो वृत्तीरुपसंहृत्य इत्येतत्, मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन्नासीत उपविशेत् । मत्परोऽहं परो यस्य सोऽयं मत्परो भवति । कश्चित्रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति । किं
तर्हि ? राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥६.१४॥

अथेदानीं योगफलमुच्यते

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥६.१५॥

युजन् समाधानां कुर्वन्नेवं यथोक्तेन विधानेन सदात्मनां सर्वदा योगी नियतमानसो नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्. मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥६.१५॥

इदानीं योगिनः आहारादिनियम उच्यते

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
नश्चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥६.१६॥

नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति । न चैकान्तमनश्नतो योगोऽस्ति । यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयोऽन्नं न तदवति [शतपथB ९.२.१.२] इति श्रुतेः । तस्मात्योगी न आत्मसंमितादन्नादधिकं न्यूनं वाश्नीयात् । अथवा, योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति । उक्तं हि

अर्धं सव्यञ्जनान्नस्य तृतीयमुदकस्य च ।
वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥ इत्यादि परिमाणम् ।

तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो भवति चार्जुन ॥

कथं पुनर्योगो भवतीत्युच्यते

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥६.१७॥

युक्ताहारविहारस्य आह्रियत इत्याहारोऽन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारस्तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य । तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य, युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥६.१७॥

अथाधुना कदा युक्तो भवति ? इत्युच्यते

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥६.१८॥

यदा विनियतं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्तामात्मन्येव केवलेऽवतिष्ठते, स्वात्मनि स्थितिं लभते इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन् काले ॥६.१८॥

तस्य योगिनः समाहितं यत्चित्तं तस्योपमोच्यते

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥६.१९॥

यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति, सोपमा उपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥६.१९॥

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥६.२०॥

यत्र यस्मिन् काले उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवात्मनि तुष्यति तुष्टिं भजते ॥६.२०॥

किं च

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥६.२१॥

सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकमनन्तमित्यर्थः, यत्तत्बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः, वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन् काले, न चैवायं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतस्तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥६.२१॥

किं च

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥६.२२॥

यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्यश्चापरमन्यल्लाभं लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति । किं च, यस्मिनात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥६.२२॥

यत्रोपरमते इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥६.२३॥

तं विद्याद्विजानीयाद्दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगः, तेन वियोगो दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्याद्विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णमनिर्विण्णम् । किं तत्? चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥६.२३॥

किं च

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥६.२४॥

संकल्पप्रभवान् संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामास्तान् त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किं च, मनसैव विवेकयुक्तेन इन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥६.२४॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥६.२५॥

शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । कया ? बुद्ध्या । किंविशिष्टया ? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः । आत्मसंस्थमात्मनि संस्थितमात्मैव सर्वं न ततोऽन्यत्किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमो विधिः ॥६.२५॥

तत्र एवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी

यतो यतो निश्चरति मन चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥६.२६॥

यतो यतो यस्माद्यस्मान्निमित्तात्शब्दादेर्निश्चरति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलम्, अत एवास्थिरम्, ततस्ततस्तस्मात्तस्मात्शब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन शब्दादेः निमित्तान्नियम्य तत्तन्नमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत्मन आत्मन्येव वशं नयेतात्मवश्यतामापादयेत् । एवं योगाभ्यासबलात्योगिन आत्मन्येव प्रशाम्यति मनः ॥६.२६॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥६.२७॥

प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य सः प्रशान्तमनास्तं प्रशान्तमनसं हि एनं योगिनं सुखमुत्तमं नितिशयमुपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवं निश्चयवन्तं ब्रह्मभूतमकल्मषं धर्माधर्मादिवर्जितम् ॥६.२७॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥६.२८॥

युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदात्मानं विगतकल्मषो विगतपापः, सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत्ब्रह्मसंस्पर्र्शं सुखमत्यन्तमन्तमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशयमश्नुते व्याप्नोति ॥६.२८॥

इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्शयते

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥६.२९॥

सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतानि आत्मन्येकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥६.२९॥

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥६.३०॥

यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्य एवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति स च विद्वान्मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति, तस्य च मम चैकात्मकत्वात् । स्वात्मा हि नामात्मनः प्रिय एव भवति । यस्माच्चाहमेव सर्वात्मैकत्वदर्शी ॥६.३०॥

इत्येतत्पूर्वलोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥६.३१॥

सर्वथा सर्वप्रकारैः वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव सः, न मोक्षं प्रति केनचित्प्रतिबध्यते इत्यर्थः ॥ ६.३१॥

किं चान्यत्

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥६.३२॥

आत्मौपम्येन आत्मा स्वयमेवोपमीयतेऽनयेत्युपमा । तस्या उपमाया भाव औपम्यं तेनात्मौपम्येन, सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन, स च किं समं पश्यतीत्युच्यते यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलम् । वाशब्दश्चार्थे । यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखेऽनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित्प्रतिकूलमाचरति, अहिंसक इत्यर्थः । यः एवमहिंसकः
सम्यग्दर्शननिष्ठः, स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्वयोगिनां मध्ये ॥६.३२॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रुषुर्ध्रुवं तत्प्राप्त्युपायमर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥६.३३॥

योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन एतस्य योगस्याहं न पश्यामि नोपलभे, चञ्चलत्वान्मनसः । किम् ? स्थिरामचलां स्थितिम् ॥६.३३॥

असिद्धं तत्

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥६.३४॥

चञ्चलं हि मनः । कृष्णेति कृषतेर्विलेखनार्थस्य रूपम् । भक्तजनपापादिदोषाकर्षणात्कृष्णः, तस्य संबुद्धिः हे कृष्ण । हि यस्मात्मनश्चञ्चलं न केवलमत्यर्थं चञ्चलम्, प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपत्सत्परवशीकरोति । किं च बलवत्प्रबलम्, न केनचित्नियन्तुं शक्यम्, दुर्निवारत्वात् । किं च दृढं तन्तुनागवदच्छेद्यम् । तस्य एवंभूतस्य मनसोऽहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोर्दुष्करो निग्रहस्ततोऽपि दुष्करं मन्ये इत्यभिप्रायः ॥६.३४॥

श्रीभगवानुवाच, एवमेतद्यथा ब्रवीषि

असंशयं महाबाहो मनो दुर्णिग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येणश्च गृह्यते ॥६.३५॥

असंशयं नास्ति संशयो मनो दुर्निग्रहं चलमित्यत्र हे महाबाहो । किंत्वभ्यासेन त्वभ्यासो नामश्चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य । वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यम् । तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारश्चित्तस्य । एवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥६.३५॥

यः पुनरसंयतात्मा, तेन

असंयतात्मना योगो दुष्प्रापेति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥६.३६॥

असंयतात्मनाभ्यासवैराग्याभ्यामसंयतः आत्मान्तःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखेन प्राप्यतेति मे मतिः । यस्तु पुनर्वश्यात्माभ्यासवैराग्याभ्यां वश्यत्वमापादितः आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योगरुपायतो यथोक्तादुपायात् ॥६.३६॥

तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि, योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गात्मरणकाले चलितचित्त इति तस्य नाशमाशङ्कयार्जुन उवाच

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥६.३७॥

अयतिरप्रयत्नवान् योगमार्गे श्रद्धयास्तिक्यबुद्ध्या चोपेतो योगादन्तकाले च चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥६.३७॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥६.३८॥

कश्चित्किं न उभयविभ्रष्टः कर्ममार्गात्योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं वा न नश्यत्यप्रतिष्ठो निराश्रयो हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥६.३८॥

एतन्मे संशयं कृष्णश्छेत्तुमर्हस्यशेषतः ।

त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥६.३९॥

एतन्मे मम संशयं कृष्णश्छेत्तुमपनेतुमर्हस्यशेषतः । त्वदन्यस्त्वत्तोऽन्यः ऋषिर्देवो वा च्छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते न संभवति । अतस्त्वमेव च्छेत्तुमर्हसीत्यर्थः ॥६.३९॥

श्रीभगवानुवाच

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥६.४०॥

हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशस्तस्य विद्यते नास्ति । नाशो नाम पूर्वस्माथीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति । न हि यस्मात्कल्याणकृत्शुभकृत्कश्चित्दुर्गतिं कुत्सितां गतिं हे तात, तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते । पितैव पुत्रेति पुत्रोऽपि तात उच्यते । शिष्योऽपि पुत्र उच्यते । यतो न गच्छति ॥६.४०॥

किं त्वस्य भवति ?

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥६.४१॥

योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकान्, तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टः अभिजायते ॥६.४१॥

अथ वा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥६.४२॥

अथवा श्रीमतां कुलातन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतथि जन्म, यत्दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥६.४२॥

यस्मात्

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥६.४३॥

तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकम् । यतते च प्रयत्नं च करोति ततस्तस्मात्पूर्वकृतात्संस्कारात्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥६.४३॥

कथं पूर्वदेहबुद्धिसंयोगेति तदुच्यते

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।

जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥६.४४॥

यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मादवशोऽपि स योगभ्रष्टः । न कृतं चेद्योगाभ्यासजात्संस्कारात्बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते । अधर्मश्चेत्बलवत्तरः कृतः, तेन योगजोऽपि संस्कारोऽभिभूयत एव, तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः । अतो जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन्नपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽतिक्रामत्यपाकरिष्यति । किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥६.४४॥

कुतश्च योगित्वं श्रेय इति

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥६.४५॥

प्रयत्नाद्यतमानः, अधिकं यतमान इत्यर्थः । तत्र योगी विद्वान् संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकजन्मसंसिद्धिरनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेन उपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततः लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टं गतिम् ॥६.४५॥

यस्मादेवं तस्मात्

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥६.४६॥

तपस्विभ्योऽधिको योगी, ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यम्, तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति । कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन ॥६.४६॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥६.४७॥

योगिनामपि सर्वेषां रूद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो माम्, स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृत श्रीमद्भगवद्गीताभाष्ये
षष्टोऽध्यायः ॥६॥

# सप्तमोऽध्यायः

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः [गीता ६.४७]

इति प्रश्नबीजमुपन्यस्य, स्वयमेव ईदृशं मदीयं तत्त्वम्, एवं मद्गतान्तरात्मा स्यादित्येतत्विवक्षुः श्रीभगवानुवाच

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥७.१॥

मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य सः मय्यासक्तमनाः, हे पार्थ ! योगं युञ्जन्मनःसमाधानं कुर्वन्, मदाश्रयोऽहमेव परमेश्वरः आश्रयो यस्य सः मदाश्रयः । यो हि कश्चित्पुरुषार्थेन केनचितर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यते, अयं तु योगी मामेवाश्रयं प्रतिपद्यते, हित्वान्यत्साधनान्तरं मय्येव आसक्तमना भवति । यस्त्वमेवंभूतः सनसंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं
मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति, तत्सृणु उच्यमानं मया ॥७.१॥

तच्च मद्विषयम्

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥७.२॥

ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कात्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुः अभिमुखीकरणाय यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनरन्यत्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशिष्टं भवति । इति मत्तत्त्वज्ञो यः, स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वात्दुर्लभं ज्ञानम् ॥७.२॥

कथमित्युच्यते

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥७.३॥

मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चित्यतति प्रयत्नं करोति सिद्धये सिद्ध्यर्थम् । तेषां यततामपि सिद्धानाम्, सिद्धा एव हि ते ये मोक्षाय यतन्ते, तेषां कश्चिदेव हि मां वेत्ति तत्त्वतो यथावत् ॥७.३॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याह

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥७.४॥

भूमिः पृथिवीतन्मात्रमुच्यते, न स्थूला । भिन्ना प्रकृतिरष्टधा इति वचनात् । तथाबादयोऽपि तन्मात्राण्येव उच्यन्ते आपोऽनलो वायुः खम् । मन इति मनसः कारणमहंकारो गृह्यते । बुद्धिरित्यहंकारकारणं महत्तत्त्वम् । अहंकार इत्यविद्यासंयुक्तमव्यक्तम् । यथा विषसंयुक्तमन्नं विषमित्युच्यते, एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते, प्रवर्तकत्वातहंकारस्य । अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥७.४॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥७.५॥

अपरा न परा निकृष्टाशुद्धानर्थकरी संसारबन्धनात्मिकेयम् । इतोऽस्याः यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां प्रकृष्टं जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो, यया प्रकृत्येदं धार्यते जगदन्तःप्रविष्टया ॥७.५॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥७.६॥

एतद्योनीनि एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्येषां भूतानां तानि एतद्योनीनि, भूतानि सर्वाणीति एवमुपधारय जानीहि । यस्मात्मम प्रकृति योनिः कारणं सर्वभूतानाम्, अतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा । प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥७.६॥

यतस्तस्मात्

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७.७॥

मत्तः परमेश्वरात्परतरमन्यत्कारणान्तरं किंचित्नास्ति न विद्यते, अहमेव जगत्कारणमित्यर्थः, हे धनंजय । यस्मादेवं तस्मात्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत्प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः । दीर्घतन्तुषु पटवत्, सूत्रे च मणिगणा इव ॥७.७॥

केन केन धर्मेण विशिष्टो त्वयि सर्वमिदं प्रोतमित्युच्यते

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥७.८॥

रसोऽहम्, अपां यः सारं स रसः, तस्मिन् रसभूते मयि आपः प्रोता इत्यर्थः । एवं सर्वत्र । यथाहमप्सु रसः, एवं प्रभास्मि शशिसूर्ययोः । प्रणव ओंकारः सर्ववेदेषु, तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दः सारभूतः, तस्मिन्मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावः पौरुषं यतः पुंबुद्धिर्नृषु, तस्मिन्मयि पुरुषाः प्रोताः ॥७.८॥

गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥७.९॥

पुण्यः सुरभिर्गन्धः पृथिव्यां चाहम् । तस्मिन्मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तेजश्च दीप्तिश्चास्मि विभावसौ अग्नौ । तथा जीवनं सर्वभूतेषु, येन जीवन्ति सर्वाणि भूतानि तत्जीवनम् । तपश्चास्मि तपस्विषु, तस्मिन् तपसि मयि तपस्विनः प्रोताः ॥७.९॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥७.१०॥

बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरन्तनम् । किं च, बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि । तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥७.१०॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥७.११॥

बलं सामर्थ्यमोजो बलवतामहम् । तच्च बलं कामरागविवर्जितम् । कामश्च रागश्च कामरागौ । कामस्तृष्णासंनिकृष्टेषु विषयेषु, रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलं सत्त्वमहमस्मि । न तु यत्संसारिणां तृष्णारागकारणम् । किं च धर्माविरुद्धः । धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामः, यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः, स कामोऽस्मि । हे भरतर्षभ ॥ ७.११॥

किं च

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥७.१२॥

ये चैव सात्त्विकाः सत्त्वनिर्वृत्ता भावाः पदार्थाः, राजसाः रजोनिर्वृत्तास्तामसास्तमोनिर्वृत्ताश्च, ये केचित्प्राणिनां स्वकर्मवशात्जायन्ते भावाः, तान्मत्त एव जायमानानिति एवं विद्धि सर्वान् समस्तानेव । एवं यद्यपि ते मत्तो जायन्ते, तथापि न त्वहं तेषु तदधीनस्तद्वशः, यथा संसारिणः । ते पुनर्मयि मद्वशाः मदधीनाः ॥७.१२॥

एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान् । तच्च किंनिमित्तं जगतोऽज्ञानम् ? इत्युच्यते

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥७.१३॥

त्रिभिर्गुणमयैः गुणविकारैः रागद्वेषमोहादिप्रकारैर्भावैः पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगन्मोहितमविवेकितामापादितं सन्नाभिजानानि माम् । एभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणं चाव्ययं व्ययरहितं जन्मादिसर्वभावविकारवर्जितमित्यर्थः ॥ ७.१३॥

कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामतीत्युच्यते

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥७.१४॥

दैवी देवस्य ममेश्वरस्य विष्णोः स्वभावभूता हि यस्मादेषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया । तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते
मायामेतां सर्वभूतमोहिनीं तरन्त्यतिक्रामन्ति । ते संसारबन्धनान्मुच्यन्त इत्यर्थः ॥७.१४॥

यदि त्वां प्रपन्नाः मायामेतां तरन्ति, कस्मात्त्वामेव सर्वे न प्रपद्यन्ते ? इत्युच्यते

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥७.१५॥

न मां परमेश्वरं नारायणं दुष्कृतिनः पापकारिणः मूढाः प्रपद्यन्ते नराधमा नराणां मध्येऽधमाः निकृष्टः। ते च माययापहृतज्ञानाः संमुषितज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥७.१५॥

ये पुनर्नरोत्तमाः पुण्यकर्माणः

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥७.१६॥

चतुर्विधाश्चतुःप्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हेऽर्जुन। आर्त आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाभिभूत आपन्नः। जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति यः। अर्थार्थी धनकामः। ज्ञानी विष्णोस्तत्त्वविच्च हे भरतर्षभ ॥७.१६॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥७.१७॥

तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित्तत्त्ववित्त्वान्नित्ययुक्तो भवति। एकभक्तिश्च, अन्यस्य भजनीयस्यादर्शनात्। अतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यते, अतिरिच्यत इत्यर्थः। प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः। प्रसिद्धं हि लोके आत्मा प्रियो भवतीति। तस्माज्ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः। स च ज्ञानी मम वासुदेवस्य आत्मैवेति ममात्यर्थं प्रियः ॥ ७.१७॥

न तर्ह्यार्तादयस्त्रयो वासुदेवस्य प्रियाः? न। किं तर्हि?

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥७.१८॥

उदारा उत्कृष्टाः सर्व एवैते। त्रयोऽपि मम प्रिया एवेत्यर्थः। न हि कश्चिन्मद्भक्तो वासुदेवस्याप्रियो भवति। ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः। तत्कस्मात्? इत्यत आह ज्ञानी त्वात्मैव, नान्यो मत्त इति मे मम मतं निश्चयः। आस्थित आरोढुं प्रवृत्तः स ज्ञानी हि यस्मादहमेव भगवान् वासुदेवो नान्योऽस्मीत्येवं युक्तात्मा समाहितचित्तः सन्मामेव परं ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥७.१८॥

ज्ञानी पुनरपि स्तूयते

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥७.१९॥

बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणामन्ते समाप्तौ ज्ञानवान् प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते। कथम्? वासुदेवः सर्वमिति। य एवं सर्वात्मानं मां नारायणं प्रतिपद्यते, स महात्मा। न तत्समोऽन्योऽस्ति, अधिको वा। अतः सुदुर्लभः, मनुष्याणां सहस्रेष्विति ह्युक्तम् ॥७.१९॥

आत्मैव सर्वं वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥७.२०॥

कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञानाः अपहृतविवेकविज्ञानाः प्रपद्यन्तेऽन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवताः । तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमस्तं तमास्थाय आश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियताः नियमिताः स्वयात्मीयया ॥७.२०॥

तेषां च कामिनाम्

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥७.२१॥

यो यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति, तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ॥७.२१॥

ययैव पूर्वं प्रवृत्तः स्वभावतो यो यां देवतातनुं श्रद्धयार्चितुमिच्छति

स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हि तान् ॥७.२२॥

स तया मद्विहितया श्रद्धया युक्तः सन् तस्या देवतातन्वा राधनमाराधनमीहते चेष्टते । लभते च ततस्तस्या आराधिताया देवतातन्वाः कामानीप्सितान्मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितान् तान्, हि यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभते इत्यर्थः । हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यम् । न हि कामा हिताः कस्यचित् ॥७.२२॥

यस्मादन्तवत्साधनव्यापाराविवेकिनः कामिनश्च ते । अतः

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥७.२३॥

अन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानाम् । देवान् देवयजो यान्ति देवान् यजन्तीति देवयजः, ते देवान् यान्ति । मद्भक्ता यान्ति मामपि । एवं समानेऽप्यायासे मामेव न प्रपद्यन्तेऽनन्तफलाय । अहो खलु कष्टं वर्तत इत्यनुक्रोशं दर्शयति भगवान् ॥७.२३॥

किंनिमित्तं मामेव न प्रपद्यन्त इत्युच्यते

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥७.२४॥

अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकिनः ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥७.२४॥

तदज्ञानं किंनिमित्तमित्युच्यते

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥७.२५॥

नाहं प्रकाशः सर्वस्य लोकस्य, केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः । योगमायासमावृतो योगो गुणानां युक्तिर्घटनं सैव माया योगमाया । तया योगमायया समावृतः, संछन्न इत्यर्थः । अत एव मूढो लोकोऽयं नाभिजानाति मामजमव्ययम् ॥७.२५॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥७.२६॥

यया योगमायया समावृतं मां लोको नाभिजानाति, नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति । यथान्यस्यापि मायाविनो माया ज्ञानं तद्वत् । यतः एवम्, अतः अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि, वर्तमानानि चार्जुन, भविष्याणि च भूतानि वेदाहम् । मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा । मत्तत्त्ववेदनाभावादेव न मां भजते ॥७.२६॥

केन पुनर्मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मां न विदन्ति ? इत्यपेक्षायामिदमाह

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥७.२७॥

इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्चेच्छाद्वेषौ । ताभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायामिदमाह द्वन्द्वमोहेन द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहस्तेन । तावेव इच्छाद्वेषौ शीतोष्णवत्परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वन्द्वशब्देनाभिधीयेते । तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतः, तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं
मोहं जनयतः । न हीच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि । किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यतेति । अतस्तेन इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन, भारत भरतान्वयज, सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मनि, उत्पत्तिकाले इत्येतत्, यान्ति गच्छन्ति हे परंतप । मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः । यत एवमतस्तेन द्वन्द्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्ति । अत एव आत्मभावेन
मां न भजन्ते ॥७.२७॥

के पुनरनेन द्वन्द्वमोहेन निर्मुक्ताः सन्तस्त्वां विदित्वा यथाशास्त्रमात्मभावे भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥७.२८॥

येषां तु पुनरन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणाम्, ते द्वन्द्वमोहनिर्मुक्ता यथोक्तेन द्वन्द्वमोहेन निर्मुक्ता भजन्ते मां परमात्मनां दृढव्रताः । एवमेव परमार्थतत्त्वं नान्यथेत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञाना दृढव्रता उच्यन्ते ॥७.२८॥

ते किमर्थं भजन्ते ? इत्युच्यते

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥७.२९॥

जरामरणमोक्षाय जरामरणयोर्मोक्षार्थं मां परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये, ते यद्ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः । कर्म चाखिलं समस्तं विदुः ॥७.२९॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥७.३०॥

साधिभूताधिदैवमधिभूतं चाधिदैवं चाधिभूताधिदैवम्, सहाधिभूताधिदैवेन वर्तत इति साधिभूताधिदैवं च मां ये विदुः । साधियज्ञं च सहाधियज्ञेन साधियज्ञं ये विदुः, प्रयाणकाले मरणकालेऽपि च मां ते विदुः । युक्तचेतसः समाहितचित्ता इति ॥७.३०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
सप्तमोऽध्यायः ॥

# अष्टमोऽध्यायः

ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवतार्जुनस्य प्रश्नबीजानि उपदिष्टनि । अतस्तत्प्रश्नार्थमर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥८.१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥८.२॥

एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥८.३॥

अक्षरं न क्षरतीत्यक्षरं पर आत्मा, एतस्य वाक्षरस्य प्रशासने गार्गि [बृहदारण्यकोपनिषद् ३.८.९] इति श्रुतेः । ओंकारस्य च ओमित्येकाक्षरं ब्रह्म [गीता ८.१३] इति परेण विशेषणादग्रहणम् । परममिति च निरतिशये ब्रह्मण्यक्षरे उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः । स्वो भावः स्वभावोऽध्यात्ममुच्यते । आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यतेऽध्यात्मशब्देनाभिधीयते । भूतभावोद्भवकरो भूतानां भावो भूतभावस्तस्य उद्भवो भूतभावोद्भवस्
तं करोतीति भूतभावोद्भवकरः, भूतवस्तूत्पत्तिकर इत्यर्थः । विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः । स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत् । एतस्माथि बीजभूताद्वृष्ट्यडादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति ॥८.३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥८.४॥

अधिभूतं प्राणिजातमधिकृत्य भवतीति । कोऽसौ ? क्षरः क्षरतीति क्षरो विनाशी, भावो यत्किंचित्जनिमत्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति, पुरि शयनात्वा, पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः, सर्वप्राणिकरणानामनुग्राहकः, सोऽधिदैवतम् । अधियज्ञः सर्वयज्ञाभिमानिनी

विष्ण्वाख्या देवता, यज्ञो वै विष्णुः [तैत्त्ष्१.७.४] इति श्रुतेः । स हि विष्णुरहमेव । अत्रास्मिन् देहे यो यज्ञस्तस्याहमधियज्ञः । यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति, देहभृतां वर ! ॥८.४॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥८.५॥

अन्तकाले मरणकाले च मामेव परमेश्वरं विष्णुं स्मरन्मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति । स मद्भावं वैष्णवं तत्त्वं याति । नास्ति न विद्यतेऽत्रास्मिन्नर्थे संशयः याति वा न वेति ॥

न मद्विषय एवायं नियमः । किं तर्हि ?

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥८.६॥

यं यं वापि यं यं भावं देवताविशेषं स्मरन् चिन्तयन् त्यजति परित्यजत्यन्तेऽन्तकाले प्राणवियोगकाले कलेवरं शरीरं तं तमेव स्मृतं भावमेव एति नान्यं कौन्तेय, सदा सर्वदा तद्भावभावितस्तस्मिन् भावस्तद्भावः स भावितः स्मर्यमाणतयाभ्यस्तो येन स तद्भावभावितः सन् ॥८.६॥

यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणम्

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥८.७॥

तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रम् । युध्यश्च युद्धं स्वधर्मं कुरु । मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन्मामेव यथास्मृतमेष्यस्यागमिष्यसि । असंशयो न संशयोऽत्र विद्यते ॥८.७॥

किं च

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८.८॥

अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूत एकस्मिंस्तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन । चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना, परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डाले भवं याति गच्छति हे पार्थानुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायनित्येतत् ॥८.८॥

किंविशिष्टं च पुरषं याति ? इत्युच्यते

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपम्

आदित्यवर्णं तमसः परस्तात् ॥८.९॥

कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरन्तनमनुशासितारं सर्वस्य जगतः प्रशासितारमणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरमनुस्मरेदनुचिन्तयेद्यः कश्चित्, सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभक्तारम्, अचिन्त्यरूपं नास्य रूपं नियतं विद्यमानमपि केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपस्तम्, आदित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णम्, तमसः परस्तात्, अज्ञानलक्षणान्मोहान्धकारात्परं तमनुचिन्तयद्यातीति पूर्वेण संबन्धः ॥८.९॥

किं च

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥८.१०॥

प्रयाणकाले मरणकाले मनसाचलेन चलनवर्जितेन भक्त्या युक्तो भजनं भक्तिस्तया युक्तो योगबलेन चैव योगस्य बलं योगबलं समाधिजसंस्कारप्रचयजनितचित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः । पूर्वं हृदयपुण्डारीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगाप्रमत्तः सन्, स एवं बुद्धिमान् योगी कविं पुराणमित्यादिलक्षणं तं परं परतरं पुरुषमुपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥८.१०॥

[योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्म प्राप्यत इत्येवं प्राप्तमिदमुच्यते ] पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान्

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥८.११॥

यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञाः वदन्ति । तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति [बृहदारण्यकोपनिषद् ३.८.८] इति श्रुतेः । सर्वविशेषनिवर्तकत्वेनाभिवदन्त्यस्थूलमण्वित्यादि । किं च विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः संन्यासिनो वीतरागाः वीतो विगतः रागो येभ्यस्ते वीतरागाः । यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति, तत्ते पदं तदक्षराख्यं पदं पदनीयं ते तव संग्रहेण, संग्रहः
संक्षेपस्तेन, संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥८.११॥

स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः [ड़्रश्नऊ ५.१२] इत्युपक्रम्य, यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स सामभिरुन्नीयते ब्रह्मलोकम् [ड़्रश्नऊ ५.५] इत्यादिना वचनेन, अन्यत्र धर्मादन्यत्राधर्माद्[Kअठू १.२.१४] इति चोपक्रम्य

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतद्[Kअठू १.२.१५]

इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत्प्रतीकरूपेण वा, परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्य

ओंकारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्, तदेवेहापि कविं पुराणमनुशासितारम् [गीता ८.९] यदक्षरं वेदविदो वदन्ति [गीता ८.११] इति चोपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्य ओंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यम् । प्रसक्तानुप्रसक्तं च यत्किंचिदित्येवमर्थ उत्तरे ग्रन्थ आरभ्यते

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्यार्धायात्मनः प्राणमास्थितो योगधारणाम् ॥८.१२॥

सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ, तानि सर्वाणि संयस्य संयमनं कृत्वा मनो हृदि हृदयपुण्डारीके निरूध्य निरोधं कृत्वा निष्प्रचारमापाद्य, तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारूह्य मूर्ध्न्यार्धाय आत्मनः प्राणमास्थितः पृवृत्तो योगधारणां धारयितुम् ॥८.१२॥

तत्रैव च धारयन्

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥८.१३॥

ओमिति एकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोंकारं व्याहरनुचारयन्, तदर्थभूतं मामीश्वरमनुस्मरननुचिन्तयन् यः प्रयाति म्रियते, स त्यजन् परित्यजन् देहं शरीरम् त्यजन् देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनः, न स्वरूपनाशेनेत्यर्थः स एवं याति गच्छति परमां प्रकृष्टां गतिम् ॥८.१३॥

किं च

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥८.१४॥

अनन्यचेता नान्यविषये चेतो यस्य सोऽयमनन्यचेताः । योगी सततं सर्वदा यो मां परमेश्वरं स्मरति । नित्यशः सततमिति नैरन्तर्यमुच्यते, नित्यशः इति दीर्घकालत्वमुच्यते । न षण्मासं संवत्सरं वा । किं तर्हि ? यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः । तस्य योगिनोऽहं सुलभः सुखेन लभ्यो हे पार्थ, नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनः । यत एवम्, अतोऽनन्यचेताः सन्मयि सदा समाहितो भवेत् ॥८.१४॥

तव सौलभ्येन किं स्यात्? इत्युच्यते । सृणु तन्मम सौलभ्येन यद्भवति

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥८.१५॥

मामुपेत्य मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं नाप्नुवन्ति न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति ? इति, तद्विशेषणमाह दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयम् । आलीयन्ते यस्मिन् दुःखानीति दुःखालयं जन्म । न केवलं दुःखालयम्, अशाश्वतमनवस्थितस्वरूपं च । नाप्नुवन्ति ईदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते ॥८.१५॥

किं पुनस्त्वत्तोऽन्यत्प्राप्ताः पुनरावर्तन्ते ? इत्युच्यते

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥८.१६॥

आ ब्रह्मभुवनात्भवन्त्यस्मिन् भूतानीति भुवनम् । ब्रह्मणो भुवनं ब्रह्मभुवनम्, ब्रह्मलोक इत्यर्थः । आ ब्रह्मभुवनात्सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः । हेऽर्जुन । मामेकमुपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिः न विद्यते ॥८.१६॥

ब्रह्मलोकसहिता लोकाः कस्मात्पुनरावर्तिनः ? कालपरिच्छिन्नत्वात् । कथम् ?

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥८.१७॥

सहस्रयुगपर्यन्तं सहस्राणि युगानि पर्यन्तः पर्यवसानं यस्याह्नस्ततहः सहस्रयुगपर्यन्तम् । ब्रह्मणः प्रजापतेर्विराजो विदुः । रात्रिमपि युगसहस्रान्तामहःपरिमाणामेव । के विदुरित्याह तेऽहोरात्रविदः कालसंख्याविदो जना इत्यर्थः । यत एवं कालपरिच्छिन्नास्ते, अतः पुनरावर्तिनो लोकाः ॥८.१७॥

प्रजापतेरहनि यद्भवति रात्रौ च, तदुच्यते

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥८.१८॥

अव्यक्तादव्यक्तं प्रजापतेः स्वापावस्था । तस्मादव्यक्ताद्व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्त्यभिव्यज्यन्ते, अह्न आगमोऽहरागमस्तस्मिनहरागमे काले ब्रह्मणः प्रबोधकाले । तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वा व्यक्तयस्तत्रैव पूर्वोक्तेऽव्यक्तसंज्ञके ॥८.१८॥

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं बन्धमोक्षशास्त्रप
्रवृत्तिसाफल्यप्रदर्शनार्थमविद्यादिक्लेशमूलकर्माशयवशाच्चावशो भूतग्रामो भूत्वा भूत्वा प्रलीयत इत्यतः संसारे वैराग्यप्रदर्शनार्थं चेदमाह

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥८.१९॥

भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन् कल्प आसीत्स एवायं नान्यः । भूत्वा भूत्वाहरागमे । प्रलीयते पुनः पुनः रात्र्यागमेऽह्नः क्षयेऽवशोऽस्वतन्त्र एव । हे पार्थ । प्रभवति जायतेऽवश एवाहरागमे ॥८.१९॥

यदुपन्यस्तमक्षरम्, तस्य प्राप्त्युपायो निर्दिष्ट ओमित्येकाक्षरं ब्रह्म [गीता ८.१३] इत्यादिना । अथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षयेदमुच्यते, अनेन योगमार्गेणेदं गन्तव्यमिति

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥८.२०॥

परो व्यतिरिक्तो भिन्नः । कुतः ? तस्मात्पूर्वोक्तात् । तुशब्दोऽक्षरस्य विवक्षितस्याव्यक्ताद्वैलक्षण्यविशेषणार्थः । भावोऽक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह अन्य इति । अन्यो विलक्षणः । स चाव्यक्तोऽनिन्द्रियगोचरः ।

परस्तस्मादित्युक्तम् । कस्मात्पुनः परः ? पूर्वोक्ताद्भूतग्रामबीजभूतादविद्यालक्षणादव्यक्तात् । अन्यो विलक्षणो भाव इत्यभिप्रायः । सनातनश्चिरन्तनो यः स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥८.२०॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥८.२१॥

योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावमाहुः परमां प्रकृष्टां गतिम् । यं परं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय, तद्धाम स्थानं परमं प्रकृष्टं मम, विष्णोः परमं पदमित्यर्थः ॥८.२१॥

तल्लब्धेरुपाय उच्यते

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥८.२२॥

पुरुषः पुरि शयनात्पूर्णत्वाद्वा । स परः पार्थ, परो निरतिशयः, यस्मात्पुरुषान्न परं किंचित् । स भक्त्या लभ्यस्तु ज्ञानलक्षणयानन्यया आत्मविषयया । यस्य पुरुषस्यान्तःस्थानि मध्यस्थानि भूतानि कार्यभूतानि । कार्यं हि कारणस्यान्तर्वर्ति भवति । येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तमाकाशेनेव घटादि ॥८.२२॥

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तय उत्तरो मार्गो वक्तव्य इति यत्र काले इत्यादि विवक्षितार्थसमर्पणार्थमुच्यते, आवृत्तिमार्गोपन्यासः इतरमार्गस्तुत्यर्थमुच्यते

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥८.२३॥

यत्र काले प्रयाता इति व्यवहितेन संबन्धः । यत्र यस्मिन् काले त्वनावृत्तिमपुनर्जन्म आवृत्तिं तद्विपरीतां चैव । योगिन इति योगिनः कर्मिणश्चोच्यन्ते । कर्मिणस्तु गुणतः कर्मयोगेन योगिनामिति विशेषणाद्योगिनः । यत्र काले प्रयाता मृता योगिनोऽनावृत्तिं यान्ति, यत्र काले च प्रयाताः आवृत्तिं यान्ति, तं कालं वक्ष्यामि भरतर्षभ ॥

तं कालमाह

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥८.२४॥

अग्निः कालाभिमानिनी देवता । तथा ज्योतिरपि देवतैव कालाभिमानिनी । अथवा, अग्निज्योतिषी यथा श्रुते एव देवते । भूयसा तु निर्देशो यत्र काले तं कालमिति आम्रवनवत् । तथाहर्देवताहरभिमानिनी । शुक्लः शुक्लपक्षदेवता । षण्मासा उत्तरायणम्, तत्रापि देवतैव मार्गभूता [बृहदारण्यकोपनिषद् ४.३.४] इति स्थितोऽन्यत्रायं न्यायः । तत्र तस्मिन्मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासका ब्रह्मोपासनपरा जनाः । क्रमेणेति वाक्यशेषः । न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति । न तस्य प्राणा उत्क्रामन्ति [बृहदारण्यकोपनिषद् ४.४.६] इति श्रुतेः । ब्रह्मसंलीनप्राणैव ते ब्रह्ममया ब्रह्मभूतैव ते ।

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥८.२५॥

धूमो रात्रिर्धूमाभिमानिनी रात्र्यभिमानिनी च देवता । तथा कृष्णः कृष्णपक्षदेवता । षण्मासा दक्षिणायनमिति च पूर्ववत्देवतैव । तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलमिष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयादिह पुनर्निवर्तते ॥८.२५॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥८.२६॥

शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे, ज्ञानप्रकाशकत्वात्शुक्ला, तदभावात्कृष्णा । एते शुक्लकृष्णे हि गती जगतः इत्यधिकृतानां ज्ञानकर्मणोः, न जगतः सर्वस्यैव एते गती संभवतः । शाश्वते नित्ये, संसारस्य नित्यत्वात्, मतेऽभिप्रेते । तत्रैकया शुक्लया यात्यनावृत्तिम्, अन्यया इतरया आवर्तते पुनर्भूयः ॥८.२६॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥८.२७॥

न एते यथोक्ते सृती मार्गौ पार्थ जानन् संसाराय एका, अन्या मोक्षायेति । योगी न मुह्यति कश्चन कश्चिदपि । तस्मात्सर्वेषु कालेषु योगयुक्तः समाहितो भवार्जुन ॥८.२७॥

शृणु तस्य योगस्य माहात्म्यम्

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥८.२८॥
वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुतिष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु यदेतेषु पुण्यफलं पुण्यस्य फलं पुण्यफलं प्रदिष्टं शास्त्रेण, अत्येत्यतीत्य गच्छति सत्सर्वं फलजातम् । इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तमर्थं सम्यगवधार्यानुष्ठाय योगी परं प्रकृष्टमैश्वरं स्थानमुपैति च प्रतिपद्यते । आद्यमादौ भवं कारणं ब्रह्मेत्यर्थः ॥८.२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
ब्रह्माक्षरनिर्देशो नाम अष्टमोऽध्यायः
॥८॥

# नवमोऽध्यायः

अष्टमे नाड्यादिद्वारेण धारणायोगः सगुण उक्तः । तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपं निर्दिष्टम् । तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते, नान्यथा इति तदाशङ्काव्याविवर्तयिषया श्रीभगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥९.१॥

इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेषु अध्यायेषु, तत्बुद्धौ संनिधीकृत्य इदमित्याह । तुशब्दो विशेषनिर्धारणार्थः । इदमेव तु सम्यग्ज्ञानं

साक्षात्मोक्षप्राप्तिसाधनं वासुदेवः सर्वमिति [गीता ७.१२], आत्मैवेदं सर्वम् [Cहाऊ ७.२५.२] एकमेवाद्वितीयम् [Cहाऊ ६.२.१] इत्यादिश्रुतिस्मृतिभ्यः। नान्यत्, अथ ते येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति [Cहाऊ ७.२५.२] इत्यादिश्रुतिभ्यश्च। ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्याम्यनसूयवेऽसूयारहिताय। किं तत्? ज्ञानम्। किंविशिष्टम्? विज्ञानसहितम्
अनुभवयुक्तम्, यज्ज्ञात्वा प्राप्य मोक्ष्यसेऽशुभात्संसारबन्धनात् ॥९.१॥

तच्च

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥९.२॥

राजविद्या विद्यानां राजा, दीप्त्यतिशयवत्त्वात्। दीप्यते हीयमतिशयेन ब्रह्मविद्या सर्वविद्यानाम्। तथा राजगुह्यं गुह्यानां राजा। पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणं ब्रह्मज्ञानमुत्कृष्टतमम्। अनेकजन्मसहस्रसंचितमपि धर्माधर्मादि समूलं कर्म क्षणमात्रादेव भस्मीकरोतीत्यतः किं तस्य पावनत्वं वक्तव्यम्? किं च प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत्प्रत्यक्षावगमम्। अनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टम्, न तथात्मज्ञानं धर्मविरोधि,
किंतु धर्म्यं धर्मादनपेतम्। एवमपि, स्याद्दुःखसंपाद्यमित्यत आह सुसुखं कर्तुम्, यथा रत्नविवेकविज्ञानम्। तत्राल्पायासानामन्येषां कर्मणां सुखसंपाद्यानामल्पफलत्वं दुष्कराणां च महाफलत्वं दृष्टमिति, इदं तु सुखसंपाद्यत्वात्फलक्षयात्व्येतीति प्राप्ते, आह अव्ययमिति। नास्य फलतः कर्मवत्व्ययोऽस्तीत्यव्ययम्। अतः श्रद्धेयमात्मज्ञानम् ॥९.२॥

ये पुनः

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥९.३॥

अश्रद्दधानाः श्रद्धाविरहिता आत्मज्ञानस्य धर्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणः, असुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्नाः। असुतृपः पापाः पुरुषा अश्रद्दधानाः। परंतप! अप्राप्य मां परमेश्वरम्, मत्प्राप्तौ नैवाशङ्केति मत्प्राप्तिमार्गभेदभक्तिमात्रमप्यप्राप्य इत्यर्थः। निवर्तन्ते निश्चयेन वर्तन्ते। क्व? मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्, तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गः, तस्मिन्नेव वर्तन्त इत्यर्थः ॥९.३॥

स्तुत्यार्जुनमभिमुखीकृत्याह

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥९.४॥

मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्तिना। न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिस्तेन मयाव्यक्तमूर्तिना, करणागोचरस्वरूपेणेत्यर्थः। तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि, सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि। न हि निरात्मकं किंचित्भूतं व्यवहारायावकल्पते। अतो मत्स्थानि मयात्मना आत्मवत्त्वेन स्थितानि। अतो मयि स्थितानीत्युच्यन्ते। तेषां भूतानामहमेवात्मा इत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासते। अतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितः। मूर्तवत्संश्लेषाभावेन आकाशस्याप्यन्तरतमो ह्यहम्। न ह्यसंसर्गि
वस्तु क्वचिताधेयभावेनावस्थितं भवति ॥९.४॥

अत एवासंसर्गित्वान्मम

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥९.५॥

न च मत्स्थानि भूतानि ब्रह्मादीनि । पश्य मे योगं युक्तिं घटानं मे मम ऐश्वरमीश्वरस्येममैश्वरम्, योगमात्मनो याथात्म्यमित्यर्थः । तथा च श्रुतिरसंसर्गित्वादसङ्गतां दर्शयति असङ्गो न हि सज्जते [बृहदारण्यकोपनिषद् ३.९.२६] इति । इदं चाश्चर्यमन्यत्पश्य भूतभृदसङ्गोऽपि सन् भूतानि बिभर्ति । न च भूतस्थः । यथोक्तेन न्यायेन दर्शितत्वात्भूतस्थत्वानुपपत्तेः । कथं पुनरुच्यतेऽसौ ममात्मेति ? विभज्य देहादिसङ्घातं तस्मिन्नहंकारमध्यारोप्य लोकबुद्धिमनुसरन् व्यपदिशति ममात्मेति, न पुनरात्मन आत्मान्य इति लोकवदजानन् । तथा भूतभावनो भूतानि भावयत्युत्पादयति वर्धयतीति वा भूतभावनः ॥९.५॥

यथोक्तेन श्लोकद्वयेनोक्तमर्थं दृष्टन्तेनोपपादयन्नाह

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥९.६॥

यथा लोके आकाशस्थित आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान् परिमाणतः, तथा आकाशवत्सर्वगते मय्यसंश्लेषेणैव स्थितानीत्येवमुपधारय विजानीहि ॥९.६॥

एवं वायुराकाशे इव मयि स्थितानि सर्वभूतानि स्थितिकाले । तानि

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥९.७॥

सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टं यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले । पुनर्भूयस्तानि भूतानि उत्पत्तिकाले कल्पादौ विसृजामि उत्पादयाम्यहं पूर्ववत् ॥९.७॥

एवमविद्यालक्षणाम्

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥९.८॥

प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं कृत्स्नमवशमस्वतन्त्रम् । अविद्यादिदोषैः परवशीकृतम् । प्रकृतेर्वशात्स्वभाववशात् ॥९.८॥

तर्हि तस्य ते परमेश्वरस्य भूतग्राममिमं विषमं विदधतः, तन्निमित्ताभ्यां धर्माधर्माभ्यां संबन्धः स्यादितीदमाह भगवान्

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९.९॥

न च मामीश्वरं तानि भूतग्रामस्य विषमसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय । तत्र कर्मणामसंबन्धित्वे कारणमाह उदासीनवतासीनं यथा उदीसीन उपेक्षकः कश्चित्तद्वदासीनमात्मनोऽविक्रियत्वात् । असक्तं फलासङ्गरहितम्, अभिमानवर्जितम्, अहं करोमीति तेषु कर्मसु ।

अतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलासङ्गाभावश्चासंबन्धकारणम्, अन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥९.९॥

तत्र भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यते, इति तत्परिहारार्थमाह

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥९.१०॥

मयाध्यक्षेण सर्वतो दृशिमात्रस्वरुपेणाविक्रियात्मनाध्यक्षेण मया, मम माया त्रिगुणात्मिकाविद्यालक्षणा प्रकृतिः सूयते उत्पादयति सचराचरं जगत् । तथा च मन्त्रवर्णः

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ [श्वेतू ६.११] इति ।

हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत्सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु । दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिः अहमिदं भोक्ष्ये, पश्यामीदम्, शृणोमीदम्, सुखमनुभवामि, दुःखमनुभवामि, तदर्थमिदं करिष्ये, इदं ज्ञास्यामि, इत्याद्यावगतिनिष्ठावगत्यवसानैव । यो अस्याध्यक्षः परमे व्योमन् [ऋक्८.७.१७.७, टैत्त्B २.८.९] इत्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति । ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात् । किंनिमित्तेयं सृष्टिर्
इत्यत्र प्रश्नप्रतिवचनेऽनुपपन्ने, को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः [ऋक्८.७.१७.८] इत्यादिमन्त्रवर्णेभ्यः । दर्शितं च भगवता अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः [गीता ५.१५] इति ॥९.१०॥

एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वजन्तूनामात्मानमपि सन्तम्

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥९.११॥

अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनः । मानुषीं मनुष्यसंबन्धिनीं तनुं देहमाश्रितम्, मनुष्यदेहेन व्यवहरन्तमित्येतत्, परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वात्मानम् । ततश्च तस्य ममावज्ञानभावनेन आहतास्ते वराकाः ॥९.११॥

कथम् ?

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥९.१२॥

मोघाशा वृथा आशा आशिषो येषां ते मोघाशाः । तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च, तेषां भगवत्परिभवात्, स्वात्मभूतस्यावज्ञानात्मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः । तथा मोघज्ञाना मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः, ज्ञानमपि तेषां निष्फलमेव स्यात् । विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः । किं च ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावमासुरीमसुराणां च प्रकृतिं मोहिनीं
मोहकरीं देहात्मवादिनीं श्रिताः आश्रिताः, । छिन्धि, भिन्धि, पिब, खाद, परस्वमपहर, इत्येवं वदनशीलाः क्रूरकर्माणो भवन्तीत्यर्थः । असुर्या नाम ते लोकाः [ईशऊ ३] इति श्रुतेः ॥९.१२॥

ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥९.१३॥

महातमानस्त्वक्षुद्रचित्ताः मामीश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ता ज्ञात्वा भूतादिं भूतानां वियदादीनां प्राणिनां चादिं कारणमव्ययम् ॥९.१३॥

कथम् ?

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥९.१४॥

सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तः, यतन्तश्च इन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च, दृढव्रता दृढं स्थिरमचाल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥९.१४॥

ते केन केन प्रकारेण उपासते इत्युच्यते

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥९.१५॥

ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन, यजन्तः पूजयन्तः मामीश्वरं चाप्यन्येऽन्यामुपासनां परित्यज्योपासते । तच्च ज्ञानम् एकत्वेनैकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते । केचिच्च पृथक्त्वेन आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरवस्थित इत्युपासते । केचित्बहुधावस्थितः स एव भगवान् सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥९.१५॥

यदि बहुभिः प्रकारैरुपासते, कथं त्वामेव उपासत इति । अत आह

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥९.१६॥

अहं क्रतुः श्रौतकर्मभेदोऽहमेव । अहं यज्ञः स्मार्तः । किं च स्वधान्नमहम्, पितृभ्यो यद्दीयते । अहमौषधं सर्वप्राणिभिर्यतद्यते ततौषधशब्दशब्दितं व्रीहियवादिसाधारणम् । अथवा स्वधेति सर्वप्राणिसाधारणमन्नम्, औषधमिति व्याध्युपशमनार्थं भेषजम् । मन्त्रोऽहम्, येन पितृभ्यो देवताभ्यश्च हविर्दीयते । अहमेव आज्यं हविश्च । अहमग्निः, यस्मिन् हूते हविः सोऽग्निरहम् । अहं हुतं हवनकर्मश्च ॥९.१६॥

किं च

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥९.१७॥

पिता जनयिताहमस्य जगतः, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता, पितामहः पितुः पिता, वेद्यं वेदितव्यम्, पवित्रं पावनमोंकारः, ऋक्साम यजुए एव च ॥९.१७॥

किं च

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥९.१८॥

गतिः कर्मफलम्, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताकृतस्य, निवासो यस्मिन् प्राणिनो निवसन्ति, शरणमार्तानाम्, प्रपन्नानामार्तिहरः । सुहृत्प्रत्युपकारानपेक्षः सन्नुपकारी, प्रभव उत्पत्तिर्जगतः, प्रलयः प्रलीयतेऽस्मिनिति, तथा स्थानं तिष्ठत्यस्मिन्निति, निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनाम्, बीजं प्ररोहकारणं प्ररोहधर्मिणाम्, अव्ययं यावत्संसारभावित्वातव्ययम्, न ह्यबीजं किंचित्प्ररोहति । नित्यं च प्ररोहदर्शनाद्बीजसंततिर्न व्येतीति गम्यते ॥९.१८॥

किं च

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥९.१९॥

तपाम्यहमादित्यो भूत्वा कैश्चित्रश्मिभिरुल्बणैः । अहं वर्षं कैश्चिद्रश्मिभिरुत्सृजामि । उत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि । अमृतं चैव देवानाम्, मृत्युश्च मर्त्यानाम् । सद्यस्य यत्संबन्धितया विद्यमानं तत्, तद्विपरीतमसच्चैवाहमर्जुन । न पुनरत्यन्तमेवासद्भगवान्, स्वयं कार्यकारणे वा सदसती ॥९.१९॥

ये पूर्वोक्तैर्निवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदः, ते यथाविज्ञानं मामेव प्राप्नुवन्ति । ये पुनरज्ञाः कामकामाः

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकम्
अश्नन्ति दिव्यान् दिवि देवभोगान् ॥९.२०॥

त्रैविद्या ऋग्यजुःसामविदो मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपाः, तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषाः, यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिस्ताम्, प्रार्थयन्ते । ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानमश्नन्ति भुञ्जते दिव्यान् दिवि भवानप्राकृतान् देवभोगान् देवानां भोगान् ॥९.२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥९.२१॥

ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकं विशन्ति आविशन्ति । एवं यथोक्तेन प्रकारेण त्रयीधर्मं केवलं वैदिकं कर्मानुप्रपन्ना गतागतं गतं चागतं च गतागतं गमनागमनं कामकामाः कामान् कामयन्त इति कामकामा लभन्ते गतागतमेव, न तु स्वातन्त्र्यं

क्वचिल्लभन्त इत्यर्थः ॥९.२१॥

ये पुनर्निष्कामाः सम्यग्दर्शिनः

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥९.२२॥

अनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तश्चिन्तयन्तो मां ये जनाः संन्यासिनः पर्युपासते, तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहम् । ज्ञानी त्वात्मैव मे मतम् [गीता ७.१८] स च मम प्रियः [गीता ७.१७] यस्माद्तस्मात्ते ममात्मभूताः प्रियाश्चेति ।

नन्वन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यं वहत्येव । किंत्वयं विशेषः अन्ये ये भक्तास्ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते । अनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते । न हि ते जीविते मरणे वात्मनो गृद्धिं कुर्वन्ति । केवलमेव भगवच्छरणास्ते । अतो भगवानेव तेषां योगक्षेमं वहतीति ॥९.२२॥

नन्वन्यापि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव यजन्ते । सत्यमेवम्

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥९.२३॥

येऽप्यन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धया आस्तिक्यबुद्ध्यान्विता अनुगताः, तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकं यजन्त इत्यर्थः ॥९.२३॥

कस्मात्तेऽविधिपूर्वकं यजन्त इत्युच्यते । यस्मात्

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥९.२४॥

अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुरेव च । मत्स्वामिको हि यज्ञः, अधियज्ञोऽहमेवात्र [गीता ८.४] इति ह्युक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्चाविधिपूर्वकमिष्ट्वा यागफलाच्च्यवन्ति प्रच्यवन्ते ते ॥९.२४॥

येऽप्यन्यदेवताभक्तिमत्त्वेनाविधिपूर्वकं यजन्ते, तेषामपि यागफलमवश्यंभावि । कथम् ?

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥९.२५॥

यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान् यान्ति । पितॄनग्निष्वात्तादीन् यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः । यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव यान्ति । समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात्, तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥९.२५॥

न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलम्, सुखाराधनश्चाहम् । कथम् ?

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥९.२६॥

पत्रं पुष्पं फलं तोयमुदकं यः मे महयं भक्त्या प्रयच्छति, ततहं पत्रादि भक्त्या उपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृहणामि प्रयतात्मनः शुद्धबुद्धेः ॥९.२६॥

यतः एवम्, अतः

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥९.२७॥

यत्करोषि स्वतः प्राप्तम्, यदश्नासि, यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नाज्यादि, यत्तपस्यसि तपश्चरसि कौन्तेय, तत्कुरुष्व मदर्पणं मत्समर्पणम् ॥९.२७॥

एवं कुर्वतस्तव यत्भवति, तत्सृणु

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥९.२८॥

शुभाशुभफलैः शुभाशुभे इष्टानिष्टे फले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैः कर्माण्येव बन्धनानि कर्मबन्धनानि तैः कर्मबन्धनैरेवं मदर्पणं कुर्वन्मोक्ष्यसे । सोऽयं संन्यासयोगो नाम, संन्यासश्चासौ मत्समर्पणतया कर्मत्वाद्योगश्चासाविति, तेन संन्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनैर्जीवन्नेव पतिते चास्मिन् शरीरे मामुपैष्यसि आगमिष्यसि ॥९.२८॥

रागद्वेषवांस्तर्हि भगवान्, यतो भक्ताननुगृहणाति, नेतरानिति तन्न

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥९.२९॥

समस्तुल्योऽहं सर्वभूतेषु । न मे द्वेष्योऽस्ति न प्रियः । अग्निवदहम् दूरस्थानां यथाग्निः शीतं नापनयति, समीपमुपसर्पतामपनयति । तथाहं भक्ताननुगृहणामि, नेतरान् । ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव, न मम रागनिमित्तम् वर्तन्ते । तेषु चाप्यहं स्वभावत एव वर्ते, नेतरेषु । नैतावता तेषु द्वेषो मम् ॥९.२९॥

सृणु मद्भक्तेर्माहात्म्यम्

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥९.३०॥

अपि चेत्यद्यपि सुदुराचारः सुष्ठु दुराचारोऽतीव कुत्सिताचारोऽपि भजते मामनन्यभाकनन्यभक्तिः सन्, साधुरेव सम्यग्वृत्त एव स मन्तव्यो

ज्ञातव्यः । सम्यग्यथावद्व्यवसितो हि सः, यस्मात्साधुनिश्चयः सः ॥९.३०॥

उत्सृज्यश्च बाह्यां दुराचारतामन्तः सम्यग्व्यवसायसामर्थ्यात्

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥९.३१॥

क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव । शश्वन्नित्यं शान्तिं चोपशमं निगच्छति प्राप्नोति । सृणु परमार्थम्, कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥९.३१॥

किं च

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥९.३२॥

मां हि यस्मात्पार्थ व्यपाश्रित्य मामाश्रयत्वेन गृहीत्वा येऽपि स्युः पापयोनयः पापा योनिर्येषां ते पापयोनयः स्युर्भवेयुः । पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः । के ते ? इत्याह स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां प्रकृष्टां गतिम् ॥९.३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥९.३३॥

किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षयस्तथा राजानश्च ते ऋषयश्चेति राजर्षयः । यत एवम्, अतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवर्जितमिमं लोकं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥९.३३॥

कथम् ?

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥९.३४॥

मयि वासुदेवे मनो यस्य तव स त्वं मन्मना भव । तथा मद्भक्तो भव । मद्याजी मद्यजनशीलो भव । मामेव च नमस्कुरु । मामेवेश्वरस्यागमिष्यसि युक्त्वा समाधाय चित्तम् । एवमात्मानं मामहं हि सर्वेषां भूतानामात्मा परा च गतिः परमयनं तं मामेवम्भूतमेष्यस्तीत्यतीतेन पदेन सम्बन्धः । मत्परायणः सन्नित्यर्थः ॥९.३४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः
॥९॥

# दशमोऽध्यायः

सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिताः, नवमे च । अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः । तत्त्वं च भगवतो वक्तव्यमुक्तमपि, दुर्विज्ञेयत्वात्, इत्यतः श्रीभगवानुवाच

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१०.१॥

भूय एव भूयः पुनर्हे महाबाहो सृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं यत्परमं ते तुभ्यं प्रीयमाणाय मद्वचनात्प्रीयसे त्वमतीवामृतमिव पिबन्, ततः वक्ष्यामि हितकाम्यया हितेच्छया ॥१०.१॥

किमर्थमहं वक्ष्यामीत्यत आह

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥१०.२॥

न मे विदुर्न जानन्ति सुरगणा ब्रह्मादयः । किं ते न विदुः ? मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथवा प्रभवं प्रभवनमुत्पत्तिम् । नापि महर्षयो भृग्वादयो विदुः । कस्मात्ते न विदुरित्युच्यते अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥१०.२॥

किं च

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥१०.३॥

यः मामजमनादिं च, यस्मातहमादिर्देवानां महर्षीणां च, न ममान्यः आदिः विद्यते । अतोऽहमजोऽनादि च । अनादित्वमजत्वे हेतुः, तं मामजमनादिं च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरं तुरीयमज्ञानतत्कार्यवर्जितमसंमूढः संमोहवर्जितः सः मत्र्येषु मनुष्येषु, सर्वपापैः सर्वैः पापैर्मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥१०.३॥

इतश्चाहं महेश्वरो लोकानाम्

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥१०.४॥

बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम्, तद्वन्तं बुद्धिमानिति हि वदन्ति । ज्ञानमात्मादिपदार्थानामवबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु विवेकपूर्विका प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वाविकृतचित्तता । सत्यं यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोउचार्यमाणा वाक्सत्यमुच्यते । दमो बाह्येन्द्रियोपशमः । शमोऽन्तःकरणस्योपशमः । सुखमाह्लादः । दुःखं सन्तापः । भव उद्भवः । अभावस्तद्विपर्ययः । भयं च त्रासः, अभयमेव च तद्विपरीतम्
॥१०.४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥१०.५॥

अहिंसापीडा प्राणिनाम् । समता समचित्तता । तुष्टिः संतोषः पर्याप्तबुद्धिर्लाभेषु । तप इन्द्रियसंयमपूर्वकं शरीरपीडानम् । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्तिः । अयशस्त्वधर्मनिमित्ता कीर्तिः । भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात्पृथग्विधाः नानाविधाः स्वकर्मानुरूपेण ॥१०.५॥

किं च

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥१०.६॥

महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनः, चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः । ते च मद्भावा मद्गतभावना वैष्णवेन सामर्थ्येन उपेताः । मानसा मनसैवोत्पादिता मया जाता उत्पन्नाः । येषां मनूनां महर्षीणां च सृष्टिर्लोक इमाः स्थावरजङ्गमलक्षणाः प्रजाः ॥१०.६॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥१०.७॥

एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं चात्मनो घटनम्, अथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते, मम मदीयं योगं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत्, सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते । नात्र संशयो नास्मिन्नर्थे संशयोऽस्ति ॥१०.७॥

कीदृशेनाविकम्पेन योगेन युज्यते ? इत्युच्यते

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥१०.८॥

अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिः । मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत्प्रवर्तते । इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वाः । भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ताः इत्यर्थः ॥१०.८॥

किं च

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥१०.९॥

मच्चित्ताः, मयि चित्तं येषां ते मच्चित्ताः । मद्गतप्राणाः मां गताः प्राप्ताश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणाः । मय्युपसंहृतकरणाः इत्यर्थः । अथवा, मद्गतप्राणाः मद्गतजीवना इत्येतत् । बोधयन्तोऽवगमयन्तः परस्परमन्योन्यम्, कथयन्तश्च ज्ञानबलवीर्यादिधर्मैर्विशिष्टं माम् । तुष्यन्ति च परितोषमुपयान्ति च रमन्ति च रतिं च प्राप्नुवन्ति प्रियसंगत्येव ॥१०.९॥

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०.१०॥

तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानाम् । किमर्थित्वादिना कारणेन ? नेत्याह प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः । ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगम्, येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेन उपयान्ति प्रतिपद्यन्ते । के ? ते ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ॥१०.१०॥

किमर्थं कस्य वा त्वत्प्राप्तिप्रतिबन्धहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासि ? इत्यपेक्षायामाह

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥१०.११॥

तेषामेव कथं नु नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयामि, आत्मभावस्थ आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥१०.११॥

यथोक्तां भगवतो विभूतिं योगं च श्रुत्वार्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१०.१२॥

परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान् । पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौ भवमादिदेवमजं विभुं विभवनशीलम् ॥१०.१२॥

ईदृशम्

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१०.१३॥

आहुः कथयन्ति त्वामृषयो वसिष्ठादयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलोऽपि एवमेवाह, व्यासश्च, स्वयं चैव त्वं च ब्रवीषि मे ॥१०.१३॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१०.१४॥

सर्वमेतद्यथोक्तमृषिभिस्त्वया चैतदृतं सत्यमेव मन्ये, यन्मां प्रति वदसि भाषसे हे केशव । न हि ते तव भगवन् व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥१०.१४॥

यतस्त्वं देवादीनामादिः, अतः

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥१०.१५॥

स्वयमेव आत्मनात्मानं वेत्थ जानासि त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरम् । पुरुषोत्तम ! भूतानि भावयतीति भूतभावनः । हे भूतभावन ! भूतेश ! भूतानामीशितः ! हे देवदेव ! जगत्पते ! ॥१०.१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१०.१६॥

वक्तुं कथयितुमर्हस्यशेषेण । दिव्या ह्यात्मविभूतयः । आत्मनो विभूतयो यास्ताः वक्तुमर्हसि । याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमान् लोकान् त्वं व्याप्य तिष्ठसि ॥१०.१६॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१०.१७॥

कथं विद्यां विजानीयामहं हे योगिन् त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन्मया ॥१०.१७॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१०.१८॥

विस्तरेणात्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन, अर्दतेर्गतिकर्मणो रूपम्, असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वात्जनार्दनोऽभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यते इति वा । भूयः पूर्वमुक्तमपि कथय । तृप्तिः परितोषो हि यस्मान्नास्ति मे मम शृण्वतस्त्वन्मुखनिःसृतवाक्यामृतम् ॥१०.१८॥

श्रीभगवानुवाच

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१०.१९॥

हन्त इदानीं ते तव दिव्या दिवि भवा आत्मविभूतयोऽत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत् । प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ ! अशेषतस्तु वर्षशतेनापि न शक्या वक्तुम्, यतो नास्त्यन्तो विस्तरस्य मे मम विभूतीनामित्यर्थः ॥१०.१९॥

तत्र प्रथममेव तावत्सृणु

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥१०.२०॥

अहमात्मा प्रत्यगात्मा गुडाकेश, गुडाका निद्रा तस्याः ईशो गुडाकेशः, जितनिद्र इत्यर्थः । घनकेशेति वा । सर्वभूताशयस्थितः सर्वेषां

भूतानामाशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयः । तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहम् । यस्मादहमेव आदिर्भूतानां कारणं तथा मध्यं च स्थितिरन्तः प्रलयश्च ॥१०.२०॥

एवं च ध्येयोऽहम्

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥१०.२१॥

आदित्यानां द्वादशानां विष्णुर्नाम आदित्योऽहम् । ज्योतिषां रविः प्रकाशयितॄणामंशुमान् रश्मिमान् । मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि । नक्षत्राणामहं शशी चन्द्रमाः ॥१०.२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥१०.२२॥

वेदानां मध्ये सामवेदोऽस्मि । देवानां रूद्रादित्यादीनां वासव इन्द्रोऽस्मि । इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि संकल्पविकल्पात्मकं मनश्चास्मि । भूतानामस्मि चेतना कार्यकरणसंघाते नित्याभिव्यक्ता बुद्धिवृत्तिश्चेतना ॥१०.२२॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥१०.२३॥

रुद्राणामेकादशानां शंकरश्चास्मि । वित्तेशः कुवेरो यक्षरक्षसां यक्षाणां रक्षसां च । वसूनामष्टनां पावकश्चास्म्यग्निः । मेरुः शिखरिणां शिखरवतामहम् ॥१०.२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥१०.२४॥

पुरोधसां च राजपुरोहितानां च मुख्यं प्रधानं मां विद्धि हे पार्थ बृहस्पतिम् । स हीन्द्रस्येति मुख्यः स्यात्पुरोधाः । सेनानीनां सेनापतीनामहं स्कन्दो देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥१०.२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥१०.२५॥

महर्षीणां भृगुरहम् । गिरां वाचां पदलक्षणानामेकमक्षरमोंकारोऽस्मि । यज्ञानां जपयज्ञोऽस्मि, स्थावराणां स्थितिमतां हिमालयः ॥१०.२५॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥१०.२६॥

अश्वत्थः सर्ववृक्षाणाम्, देवर्षीणां च नारदो देवाः एव सन्तः ऋषित्वं प्राप्ताः मन्त्रदर्शित्वात्ते देवर्षयः । तेषां नारदोऽस्मि । गन्धर्वाणां चित्ररथो नाम गन्धर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥१०.२६॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥१०.२७॥

उचैःश्रवसम वानामुचैःश्रवाः नामा वराजस्तं मां विद्धि विजानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतमिरावत्याः अपत्यं गजेन्द्राणां हस्तीश्वराणाम्, तं मां विद्धीत्यनुवर्तते । नराणां च मनुष्याणां नराधिपं राजानं मां विद्धि जानीहि ॥१०.२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥१०.२८॥

आयुधानामहं वज्रं दधीच्यस्थिसंभवम् । धेनूनां दोग्ध्रीणामस्मि कामधुक्वसिष्ठस्य सर्वकामानां दोग्ध्री, सामान्या वा कामधुक् । प्रजनः प्रजनयितास्मि कन्दर्पः कामः । सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥१०.२८॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥१०.२९॥

अनन्तश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि । वरुणो यादसामहमब्देवतानां राजाहम् । पितॄणामर्यमा नाम पितृराजश्चास्मि । यमः संयमतां संयमनं कुर्वतामहम् ॥१०.२९॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥१०.३०॥

प्रह्लादो नामश्चास्मि दैत्यानां दितिवंश्यानाम् । कालः कलयतां कलनं गणनं कुर्वतामहम् । मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वाहम् । वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥१०.३०॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥१०.३१॥

पवनो वायुः पवतां पावयितॄणामस्मि । रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथिः रामोऽहम् । झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहम् । स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥१०.३१॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥१०.३२॥

सर्गाणां सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलया अहमर्जुन । भूतानां जीवाधिष्ठितानामेव आदिरन्तश्चेत्याद्युक्तमुपक्रमे, इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात्प्रधानमस्मि । वादोऽर्थनिर्णयहेतुत्वात्प्रवदतां प्रधानम्, अतः सोऽहमस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥१०.३२॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥१०.३३॥

अक्षराणां वर्णानामकारो वर्णोऽस्मि । द्वन्द्वः समासोऽस्मि सामासिकस्य च समाससमूहस्य । किं चाहमेवाक्षयः कालः प्रसिद्धः क्षणाद्याख्यः, अथवा परमेश्वरः कालस्यापि कालोऽस्मि । धाताहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥१०.३३॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥१०.३४॥

मृत्युर्द्विविधो धनादिहरः प्राणहरश्च । तत्र यः प्राणहरः, स सर्वहर उच्यते । सोऽहमित्यर्थः । अथवा, पर ईश्वरः प्रलये सर्वहरणात्सर्वहरः, सोऽहम् । उद्भव उत्कर्षः अभ्युदयस्तत्प्राप्तिहेतुश्चाहम् । केषाम् ? भविष्यतां भाविकल्याणानाम्, उत्कर्षप्राप्तियोग्यानामित्यर्थः । कीर्तिः श्रीः वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा इत्येता उत्तमाः स्त्रीणामहमस्मि, यासामाभासमात्रसंबन्धेनापि लोकः कृतार्थमात्मानं मन्यते ॥१०.३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥१०.३५॥

बृहत्साम तथा साम्नां प्रधानमस्मि । गायत्री च्छन्दसामहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्री ऋगहमस्मीत्यर्थः । मासानां मार्गशीर्षोऽहम्, ऋतूनां कुसुमाकरो वसन्तः ॥१०.३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥१०.३६॥

द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि । तेजस्विनां तेजोऽहम् । जयोऽस्मि जेतॄणाम् । व्यवसायोऽस्मि व्यवसायिनाम् । सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥१०.३६॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥१०.३७॥

वृष्णीनां यादवानां वासुदेवोऽस्म्ययमेवाहं त्वत्सखः । पाण्डावानां धनंजयस्त्वमेव । मुनीनीं मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः, कवीनां क्रान्तदर्शिनामुशना कविरस्मि ॥१०.३७॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥१०.३८॥

दण्डो दमयतां दमयितृणामस्म्यदान्तानां दमनकारः । नीतिरस्मि जिगीषतां जेतुमिच्छताम् । मौनं चैवास्मि गुह्यानां गोप्यानाम् । ज्ञानं ज्ञानवतामहम् ॥१०.३८॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥१०.३९॥

यच्चापि सर्वभूतानां बीजं प्ररोहकारणम्, तदहमर्जुन । प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं चरमचरं वा, मया विना यत्स्यात्भवेत् । मयापकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत्स्यात् । अतो मदात्मकं सर्वमित्यर्थः ॥१०.३९॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥१०.४०॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप । न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केनचित् । एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरः मया ॥१०.४०॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोऽंशसंभवम् ॥१०.४१॥

यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तु श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीस्तया सहितमुत्साहोपेतं वा । तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोऽंशसंभवं तेजसोऽंश एकदेशः संभवो यस्य तत्तेजोऽंशसंभवमित्यवगच्छ त्वम् ॥१०.४१॥

अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥१०.४२॥

अथवा बहुनैतेन एवमादिना किं ज्ञातेन तवार्जुन स्यात्सावशेषेण । अशेषतस्त्वमुच्यमानमर्थं सृणु विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वेदं कृत्स्नं जगदेकांशेनैकावयवेनैकपादेन, सर्वभूतस्वरूपेणेत्येतत् । तथा च मन्त्रवर्णः पादोऽस्य विश्वा भूतानि [ऋक्८.४.१७.३] इति । स्थितोऽहमिति ॥ १०.४२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोवन्दिभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
दशमोऽध्यायः ॥

# एकादशोऽध्यायः

भगवतो विभूतय उक्ताः । तत्र च विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्[गीता १०.४२] इति भगवताभिहितं श्रुत्वा यत्जगदात्मरूपम्, आद्यमैश्वरं तत्साक्षात्कर्तुमिच्छन्नर्जुन उवाच

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥११.१॥

मदनुग्रहाय ममानुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचो वाक्यं तेन ते वचसा मोहोऽयं विगतो मम। अविवेकबुद्धिरपगतेत्यर्थः ॥११.१॥

किं च

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥११.२॥

भव उत्पत्तिरप्ययः प्रलयस्तौ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशः मया, न संक्षेपतः। त्वत्तस्त्वत्सकाशात्। कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षो, हे कमलपत्राक्ष! महात्मनो भावो माहात्म्यमपि चाव्ययमक्षयम्। श्रुतमित्यनुवर्तते ॥११.२॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥११.३॥

एवमेतन्नान्यथा यथा येन प्रकारेण आत्थ कथयसि त्वमात्मानं परमेश्वर। तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम ॥११.३॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥११.४॥

मन्यसे चिन्तयसि यदि मयार्जुनेन तच्छक्यं द्रष्टुमिति प्रभो! स्वामिन्! योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरः, हे योगेश्वर! यस्मादहमतीवार्थी द्रष्टुम्, ततस्तस्मान्मे मदर्थं त्वमात्मानमव्ययम् ॥११.४॥

एवं चोदितोऽर्जुनेन भगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥११.५॥

पश्य मे पार्थ! रूपाणि शतशोऽथ सहस्रशः। अनेकश इत्यर्थः। तानि च नानाविधान्यनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि च नाना विलक्षणा नीलपीतादिप्रकारा वर्णास्तथाकृतयश्चावयवसंस्थानविशेषो येषां रूपाणां तानि नानावर्णाकृतीनी च ॥११.५॥

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥११.६॥

पश्यादित्यान् द्वादश। वसूनष्टौ। रुद्रानेकादश। अश्विनौ द्वौ। मरुतः सप्तसप्तगणा ये तान्। तथा च बहून्यन्यान्यप्यदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्। पश्याश्चर्याण्यद्भुतानि भारत ॥११.६॥

न केवलमेतावदेव

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥११.७॥

इहैकस्थमेकस्मिन्नेव स्थितं जगत्कृत्स्नं समस्तं पश्याद्य इदानीं सचराचरं सह चरेणाचरेण च वर्तते मम देहे गुडाकेश। यच्चान्यत्जयपराजयादि। यत्शङ्कसे, यद्वा जयेम यदि वा नो जयेयुर्[गीता २.६] इति यतवोचः, तदपि द्रष्टुं यदीच्छसि ॥११.७॥

किं तु
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।

दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥११.८॥

न तु मां विश्वरूपधरं शक्यसे द्रष्टुमनेनैव प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा । येन तु शक्यसे द्रष्टुं दिव्येन, तद्दिव्यं ददामि ते तुभ्यं चक्षुः । तेन पश्य मे योगमैश्वरमीश्वरस्य मम ऐश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥११.८॥

संजय उवाच

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥११.९॥

एवं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन् धृतराष्ट्र ! महायोगेश्वरो महांश्चासौ योगेश्वरश्महायोगेश्वरो हरिर्नारायणो दर्शयामास दर्शितवान् पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥११.९॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥११.१०॥

अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तदनेकवक्त्रनयनम्, अनेकाद्भुतदर्शनमनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन् रूपे तदनेकाद्भुतदर्शनं रूपम् । तथानेकदिव्याभरणमनेकानि दिव्यान्याभरणानि यस्मिन् तदनेकदिव्याभरणम् । तथा दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्यस्यादीनि उद्यतान्यायुधानि यस्मिन् तद्दिव्यानेकोद्यतायुधम् । दर्शयामासेति पूर्वेण संबन्धः ॥११.१०॥

किं च

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११.११॥

दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरम्, दिव्यगन्धानुलेपनं दिव्यं गन्धानुलेपनं यस्य तं दिव्यगन्धानुलेपनम्, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवमनन्तं नास्यान्तोऽस्तीत्यनन्तस्तम्, विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मभूतत्वात्, तं दर्शयामास । अर्जुनो ददर्शेति वाध्याह्रियते ॥११.११॥

या पुनर्भगवतो विश्वरूपस्य भाः, तस्या उपमोच्यते

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥११.१२॥

अन्तरिक्षे वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य सूर्यसहस्रस्य या युगपदुत्थिता भाः, सा यदि, सदृशी स्यात्तस्य महात्मनो विश्वरूपस्यैव भासः । यदि वा न स्यात्, ततो विश्वरूपस्यैव भा अतिरिच्यते इत्यभिप्रायः ॥११.१२॥

किं च
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥११.१३॥

तत्र तस्मिन् विश्वरूप एकस्मिन् स्थितमेकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यद्दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डावोऽर्जुनस्तदा ॥११.१३॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥११.१४॥

ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाणि यस्य सोऽयं हृष्टरोमा चाभवद्धनञ्जयः । प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिः नमस्कारार्थं संपुटीकृतहस्तः सन्नभाषत उक्तवान् ॥११.१४॥

कथम् ? यत्त्वया दर्शितं विश्वरूपम्, तदहं पश्यामीति स्वानुभवमाविष्कुर्वन्नर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थम्
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥११.१५॥

पश्याम्युपलभे हे देव, तव देहे देवान् सर्वान्, तथा भूतविशेषसंघान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां संघा भूतविशेषसंघास्तान्, किं च ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वसिष्ठादीन् सर्वान्, उरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥११.१५॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥११.१६॥

अनेकबाहूदरवक्त्रनेत्रमनेके बाहवरुदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रम् । पश्यामि त्वा त्वां सर्वतः सर्वत्रानन्तरूपमनन्तानि रूपाण्यस्य इत्यनन्तरूपस्तमनन्तरूपम् । नान्तम्, अन्तोऽवसानम्, न मध्यम्, मध्यं नाम द्वयोः कोट्योरन्तरम् । न पुनस्तवादिम् न देवस्यान्तं पश्यामि, न मध्यं पश्यामि, न पुनरादिं पश्यामि । हे विश्वेश्वर विश्वरूप ॥११.१६॥

किं च
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥११.१७॥

किरीटिआनं किरीटां नाम शिरोभूषणविशेषस्तत्यस्यास्ति सः किरीटी तं किरीटिआनम्, तथा गदिनं गदास्य विद्यते इति गदी तं गदिनम्, तथा चक्रिणं चक्त्रमस्यास्तीति चक्री तं चक्रिणं च, तेजोराशिं तेजःपुजं सर्वतोदीप्तिमन्तं सर्वतोदीप्तिरस्यास्तीति सर्वतोदीप्तिमान्, तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं समन्तात्समन्ततः सर्वत्र दीप्तानलार्कद्युतिमनलश्चार्कश्चानलार्कौ दीप्तौ अनलार्कौ दीप्तानलार्कौ तयोः दीप्तानलार्कयोः द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्यतिम्
अप्रमेयं न प्रमेयमशक्यपरिच्छेदमित्येतत् ॥११.१७॥

इत एव ते योगशक्तिदर्शनातनुमिनोमि

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥११.१८॥

त्वमक्षरं न क्षरतीति, परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं पर आश्रय इत्यर्थः । किं च, त्वमव्ययो न तव व्ययो विद्यत इत्यव्ययः । शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता । सनातनश्चिरन्तनस्त्वं पुरुषः परमः मतोऽभिप्रेतः मे मम ॥११.१८॥

किं च
अनादिमध्यान्तमनन्तवीर्यम्
अनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥११.१९॥

अनादिमध्यान्तमादि च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्, तं त्वामनादिमध्यान्तम् । अनन्तवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनन्तवीर्यस्, तं त्वामनन्तवीर्यम् । तथानन्तबाहुमनन्ता बाहवो यस्य तव स त्वम्, अनन्तबाहुस्तं त्वामनन्तबाहुम् । शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्, तं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनम् । पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रस्, तं त्वां दीप्तहुताशवक्त्रम् । स्वतेजसा विश्वमिदं समस्तं तपन्तम् ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥११.२०॥

द्यावापृथिव्योरिदमन्तरं ह्यन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ताः । दृष्ट्वा उपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा । हे महात्मन् ! अक्षुद्रस्वभाव ॥११.२०॥

अथाधुना पुरा यद्वा जयेम यदि वा नो जयेयुः [गीता २.६] इत्यर्जुनस्य यः संशय आसीत्, तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवान् । तं पश्यन्नाह । किं च
अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥११.२१॥

अमी हि युध्यमाना योद्धारस्त्वा त्वां सुरसंघाः येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसंघा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते । तत्र केचित्भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तः । युद्धे प्रत्युपस्थित उत्पातादिनिमित्तानि उपलक्ष्य स्वस्त्यस्तु जगत इति उक्त्वा महर्षिसिद्धसंघाः महर्षीणां सिद्धानां च संघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥११.२१॥

किं चान्यत्
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥११.२२॥

रुद्रादित्याः वसवो ये च साध्याः रुद्रादयो गणाः विश्वेदेवा अश्विनौ च देवौ मरुतश्च ऊष्मपा च पितरः, गन्धर्वयक्षासुरसिद्धसंघाः गन्धर्षः हाहाहूहूप्रभृतयो यक्षाः कुबेरप्रभृतयोऽसुराः विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां संघाः गन्धर्वयक्षासुरसिद्धसंघाः, ते वीक्षन्ते पश्यन्ति त्वां विस्मिताः विस्मयमापन्नाः सन्तस्ते एव सर्वे ॥११.२२॥

यस्मात्
रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥११.२३॥

रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि चक्षूंषि च यस्मिन् तद्रूपं बहुवक्त्रनेत्रम् । हे महाबाहो ! बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादम् । किं च, बहूदरं बहूनि उदराणि यस्मिन्निति बहूदरम् । बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालम् । दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन । तथाहमपि ॥११.२३॥

तत्रेदं कारणम्
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा

धृतिं न विन्दामि शमं च विष्णो ॥११.२४॥

नभःस्पृशं द्युस्पर्शमित्यर्थः । दीप्तं प्रज्वलितम् । अनेकवर्णमनेके वर्णा भयङ्कराः नानासंस्थाना यस्मिन् त्वयि तं त्वामनेकवर्णम् । व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननम् । दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिन् त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमं चोपशमनं मनस्तुष्टिम् । हे विष्णो ॥११.२४॥

कस्मात्?
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥११.२५॥

दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसंनिभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलस्तत्सदृशानि कालानलसंनिभानि मुखानि दृष्ट्वेत्येतत् । दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातोऽस्मि । अतो न लभे च नोपलभे च शर्म सुखम् । अतः प्रसीद प्रसन्नो भव हे देवेश, जगन्निवास ॥११.२५॥

येभ्यो मम पराजयाशङ्का यासीत्सा चापगता । यतः

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥११.२६॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः दुर्योधनप्रभृतयः त्वरमाणाः विशन्तीति व्यवहितेन संबन्धः सर्वे सहैव सहिताः अवनिपालसंघैरवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां संघैः, किं च भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैर्योधानां मुख्यैः प्रधानैः सह ॥११.२६॥

किं च
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥११.२७॥

वक्त्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति । किंविशिष्टनि मुखानि ? दंष्ट्राकरालानि भयानकानि भयङ्कराणि । किं च, केचित्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु मांसमिव भक्षितं संदृश्यन्त उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः ॥११.२७॥

कथं प्रविशन्ति मुखानि ? इत्याह

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।

तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥११.२८॥

यथा नदीनां स्रवन्तीनां बहवोऽनेकेऽम्बूनां वेगा अम्बुवेगास्त्वराविशेषाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति प्रविशन्ति । तथा तद्वत्तवामी भीष्मादयो नरलोकवीरा मनुष्यलोके शूराः विशन्ति वक्त्राण्यभिविज्वलन्ति प्रकाशमानानि ॥११.२८॥

ते किमर्थं प्रविशन्ति कथं च ? इत्याह

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्
तवापि वक्त्राणि समृद्धवेगाः ॥११.२९॥

यथा प्रदीप्तं ज्वलनमग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्ध उद्भूतो वेगो गतिर्येषां ते समृद्धवेगाः । तथैव नाशाय विशन्ति लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥११.२९॥

त्वं पुनः

लेलिह्यसे ग्रसमानः समन्ताल्
लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥११.३०॥

लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तः प्रवेशयन् समन्तात्समन्ततः लोकान् समग्रान् समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य संव्याप्य जगत्समग्रं सहाग्रेण समस्तमित्येतत् । किं च, भासो दीप्तयस्तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील ॥११.३०॥

यतः एवमुग्रस्वभावः, अतः

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥११.३१॥

आख्याहि कथय मे मह्यं को भवानुग्ररूपः क्रूराकारः । नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान, प्रसीद प्रसादं कुरु । विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यम्, न हि यस्मात्प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टम् ॥११.३१॥

श्रीभगवानुवाच
कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥११.३२॥

कालोऽस्मि लोकक्षयकृत्लोकानां क्षयं करोतीति लोकक्षयकृत्प्रवृद्धो वृद्धिं गतः । यदर्थं प्रवृद्धस्तच्छृणु लोकान् समाहर्तुं संहर्तुमिहास्मिन् काले प्रवृत्तः । ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे, येभ्यस्तव आशङ्का, येऽवस्थिताः प्रत्यनीकेषु अनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेषु अनीकेषु योधा योद्धारः ॥११.३२॥

यस्मादेवम्
तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥११.३३॥

तस्मात्त्वमुत्तिष्ठ भीष्मप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशः लभस्व । केवलं पुण्यैर्हि तत्प्राप्यते । जित्वा शत्रून् दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धमसपत्नमकण्टकम् । मयैवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव । निमित्तमात्रं भव त्वम् । हे सव्यसाचिन् ! सव्येन वामेनापि हस्तेन शराणां क्षेपात्सव्यसाचीत्युच्यतेऽर्जुनः ॥११.३३॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥११.३४॥

द्रोणं च, येषु येषु योधेष्वर्जुनस्याशङ्का तांस्तान् व्यपदिशति भगवान्मया हतानिति । तत्र द्रोणभीष्मयोस्तावत्प्रसिद्धमाशङ्काकारणम् । द्रोणस्तु धनुर्वेदाचार्यो दिव्यास्त्रसंपन्नः । आत्मनश्च विशेषतो गुरुर्गरिष्ठः । भीष्मश्च स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमगमत्, न च पराजितः । तथा जयद्रथः । यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ निपातयिष्यति यः, तस्यापि शिरः पतिष्यतीति । कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनो यतः, अतस्तन्नाम्नैव निर्देशः
। मया हतान् त्वं जहि निमित्तमात्रेण । मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः । युध्यस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥ ११.३४॥

संजय उवाच

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥११.३५॥

एतत्श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्वा । भूयः पुनरेवाहोक्तवान् कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात्स्नेहाविष्टस्य च हर्षोद्भवात्, अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः । ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत्सगद्गदस्तेन सह वर्तततेति सगद्गदं वचनमाहेति वचनक्रियाविशेषणमेतत् । भीतभीतः पुनः पुनर्भयाविष्टचेताः सन् प्रणम्य प्रह्वो भूत्वा । आहेति व्यवहितेन संबन्धः ॥११.३५॥

अर्जुन उवाच
स्थाने हृषीकेश तव प्रकीर्त्या

जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥११.३६॥

स्थाने युक्तम् । किं तत्? तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन । हे हृषीकेश ! यत्जगत्प्रहृष्यति प्रहर्षमुपैति, तत्स्थाने युक्तमित्यर्थः । अथवा विषयविशेषणं स्थान इति । युक्तो हर्षादिविषयो भगवान्, यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति । तथानुरज्यतेऽनुरागं चोपैति । तच्च विषय इति व्याख्येयम् । किं च, रक्षांसि भीतानि भयाविष्टनि दिशो द्रवन्ति गच्छन्ति । तच्च स्थाने विषये । सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसंघाः सिद्धानां समुदायाः कपिलादीनाम्, तच्च स्थाने ॥११.३६॥

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥११.३७॥

कस्माच्च हेतोस्ते तुभ्यं न नमेरन्नमस्कुर्युर्हे महात्मन् ! गरीयसे गुरुतराय । यतो ब्रह्मणो हिरण्यगर्भस्यापि आदिकर्ता कारणमतस्तस्मादादिकर्त्रे । कथमेते न नमस्कुर्युः ? अतो हर्षादीनां नमस्कारस्य च स्थानं त्वमर्हो विषय इत्यर्थः । हेऽनन्त देवेश हे जगन्निवास त्वमक्षरं तत्परम्, यद्वेदान्तेषु श्रूयते । किं तत्? सदसदिति । सद्विद्यमानम्, असच्च यत्र नास्तीति बुद्धिः । त उपधानभूते सदसती यस्याक्षरस्य, यद्द्वारेण सदसदित्युपचर्यते । परमार्थतस्तु सदसतोः परं ततक्षरं यदक्षरं वेदविदो वदन्ति [गीता ८.११] । तत्त्वमेव, नान्यदित्यभिप्रायः ॥११.३७॥

पुनरपि स्तौति
त्वमादिदेवः पुरुषः पुराणस्
त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥११.३८॥

त्वमादिदेवो जगतः स्रष्टृत्वात् । पुरुषः, पुरि शयनात्पुराणश्चिरन्तनस्त्वमेवास्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन् जगत्सर्वं महाप्रलयादाविति । किं च, वेत्तासि, वेदितासि सर्वस्यैव वेद्यजातस्य । यच्च वेद्यं वेदनार्हं तच्चासि परं च धाम परमं पदं वैष्णवम् । त्वया ततं व्याप्तं विश्वं समस्तम् । हेऽनन्तरूप ! अन्तो न विद्यते तव रूपाणाम् ॥११.३८॥

किं च
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥११.३९॥

वायुस्त्वं यमश्चाग्निः वरुणोऽपां पतिः शशाङ्कश्चन्द्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहः, ब्रह्मणोऽपि पिता इत्यर्थः । नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः । पुनश्च भूयोऽपि नमो नमस्ते । बहुशो नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वसुचोच्यते । पुनश्च भूयोऽपीति श्रद्धाभक्तयतिशयादपरितोषमात्मनो दर्शयति ॥११.३९॥

तथा
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥११.४०॥

नमः पुरस्तात्पूर्वस्यां दिशि तुभ्यम्, अथ पृष्ठतस्ते पृष्ठतोऽपि च ते नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय । हे सर्व ! अनन्तवीर्यामितविक्रमोऽनन्तं वीर्यमस्य, अमितो विक्रमोऽस्य । वीर्यं सामर्थ्यं विक्रमः पराक्रमः । वीर्यवानपि कश्चित्शत्रुवधादिविषये न पराक्रमते, मन्दपराक्रमो वा । त्वं त्वनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्यामितविक्रमः । सर्वं समस्तं जगत्समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि यतः, ततस्तस्मादसि भवसि सर्वस्त्वम् । त्वया विनाभूतं न किंचिदस्तीत्यभिप्रायः ॥११.४०॥

यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराद्धः । अतः

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥११.४१॥

सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे यादव हे सखेति चाजानताज्ञानिना मूढेन । किमजानता ? इत्याह महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपम् । तवेदं महिमानमजानतेति वैयधिकरण्येन संबन्धः । तवेममिति पाठो यद्यस्ति, तदा सामानाधिकरण्यमेव । मया प्रमादात्विक्षिप्तचित्ततया, प्रणयेन वापि । प्रणयो नाम स्नेहनिमित्तो विस्रम्भः । तेनापि कारणेन यदुक्तवानस्मि ॥११.४१॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथ वाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥११.४२॥

यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवसि । क्व ? विहारशय्यासनभोजनेषु । विहरणं विहारः पादव्यायामः, शयनं शय्या, आसनमास्थायिका, भोजनमदनम्, इत्येतेषु विहारशय्यासनभोजनेषु, एकः परोक्षः सन्नसत्कृतोऽसि परिभूतोऽसि । अथवापि हेऽच्युत ! तत्समक्षम्, तच्छब्दः क्रियाविशेषणार्थः, प्रत्यक्षं वासत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥११.४२॥

यतस्त्वम्

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥११.४३॥

पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य । न केवलं त्वमस्य जगतः पिता । पूज्यश्च पूजार्हः, यतो गुरुर्गरीयान् गुरुतरः । कस्माद्गुरुतरस्त्वमित्याह न त्वत्समस्त्वत्तुल्योऽस्ति । न हीश्वरद्वयं संभवति, अनेके वरत्वे व्यवहारानुपपत्तेः । त्वत्सम एव तावदन्यो न संभवति । कुत एवान्योऽभ्यधिकः स्याल्लोकत्रयेऽपि सर्वस्मिन् ? अप्रतिमप्रभाव ! प्रतिमीयते यया सा प्रतिमा, न विद्यते प्रतिमा

यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावो हेऽप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः ॥११.४३॥

यत एवम्

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥११.४४॥

तस्मात्प्रणम्य नमस्कृत्य, प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरम्, प्रसादये प्रसादं कारये त्वामहमीशमीशितारम्, ईड्यं स्तुत्यम् । त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते, सर्वं सखेव सख्युरपराधम्, यथा वा प्रियः प्रियाया अपराधं क्षमते । एवमर्हसि हे देव ! सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥११.४४॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥११.४५॥

अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा, ततहं दृष्ट्वा हृषितोऽस्मि । भयेन च प्रव्यथितं मनः मे । अतस्तदेव मे मम दर्शय हे देव रूपं यत्मत्सखम् । प्रसीद देवेश, जगन्निवास जगतो निवासो जगन्निवासः, हे जगन्निवास ॥११.४५॥

किरीटिनं गदिनं चक्रहस्तम्
इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥११.४६॥

किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहम्, तथैव पूर्ववदित्यर्थः । यत एवम्, तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन, सहस्रबाहो ! वार्तमानिकेन विश्वरूपेण, भव विश्वमूर्ते । उपसंहृत्य विश्वरूपम्, तेनैव रूपेण भवेत्यर्थः ॥११.४६॥

अर्जुनं भीतमुपलभ्य, उपसंहृत्य विश्वरूपम्, प्रियवचनेन आश्वासयन् श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तम्
आद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥११.४७॥

मया प्रसन्नेन, प्रसादो नाम त्वय्यनुग्रहबुद्धिः, तद्वता प्रसन्नेन मया तव । हेऽर्जुन ! इदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात् । तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं, यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥ ११.४७॥

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति तत्स्तौति

न वेद यज्ञाध्ययनैर्न दानैर्
न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥११.४८॥

न वेदयज्ञाध्ययनैश्चतुर्णामपि वेदानामध्ययनैर्यथावत्यज्ञाध्ययनैश्च वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथक्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम् तथा न दानैस्तुलापुरुषादिभिः, न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिः, नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैः, एवंरूपो यथादर्शितं विश्वरूपं यस्य सोऽहमेवंरूपो न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरप्रवीर ॥११.४८॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥११.४९॥

मा ते व्यथा मा भूत्ते भयम्, मा च विमूढभावो विमूढचित्तता, दृष्ट्वोपलभ्य रूपं घोरमीदृक्यथादर्शितं ममेदम् । व्यपेतभीर्विगतभयः, प्रीतमनाश्च सन् पुनर्भूयस्त्वं तदेव चतुर्भुजं रूपं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥११.४९॥

संजय उवाच
इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥११.५०॥

इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा, स्वकं वसुदेवस्य गृहे जातं रूपं दर्शयामास दर्शितवान् भूयः पुनः । आश्वासयामास च आश्वासितवान् भीतमेनम्, भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥११.५०॥

अर्जुन उवाच
दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥११.५१॥

दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन, इदानीम्, अधुनास्मि संवृत्तः संजातः । किम् ? सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥११.५१॥

श्रीभगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥११.५२॥

सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शम् । इदं रूपं दृष्टवानसि यन्मम, देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणः । दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तः, न द्रक्ष्यन्ति चेत्यभिप्रायः ॥११.५२॥

कस्मात्?

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥११.५३॥

नाहं वेदैः ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि, न तपसा उग्रेण चान्द्रायणादिना, न दानेन गोभूहिरण्यादिना, न चेज्यया यज्ञेन पूजया वा शक्यः एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥११.५३॥

कथं पुनः शक्य इत्युच्यते

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥११.५४॥

भक्त्या तु किंविशिष्टया इत्याह अनन्ययापृथग्भूतया, भगवतोऽन्यत्र पृथङ्न कदाचिदपि या भवति सा त्वनन्या भक्तिः । सर्वैरपि करणैः वासुदेवादन्यन्न उपलभ्यते यया, सानन्या भक्तिः, तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन, ज्ञातुं शास्त्रतः । न केवलं ज्ञातुं शास्त्रतः, द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः, प्रवेष्टुं च मोक्षं च गन्तुं परन्तप ॥११.५४॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥११.५५॥

मत्कर्मकृन्मदर्थं कर्म मत्कर्म, तत्करोतीति मत्कर्मकृत् । मत्परमः करोति भृत्यः स्वामिकर्म, न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते । अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यते इति मत्परमः, अहं परमः परा गतिर्यस्य सोऽयं मत्परमः । तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजते इति मद्भक्तः । सङ्गवर्जितो धनपुत्रमित्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहस्तद्वर्जितः । निर्वैरो निर्गतवैरः सर्वभूतेषु शत्रुभावरहित
आत्मनोऽ त्यन्तापकारप्रवृत्तेष्वपि । य ईदृशो मद्भक्तः स मामेति । अहमेव तस्य परा गतिः, नान्या गतिः काचित्भवति । अयं तवोपदेश इष्टो मया उपदिष्टः । हे पाण्डाव ! इति ॥११.५५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
एकादशोऽध्यायः ॥११॥

# द्वादशोऽध्यायः

द्वितीयाध्यायप्रभृतिषु विभूत्यन्तेषु अध्यायेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वोपाधिविशेषस्योपासनमुक्तम् । सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तत्र चोपासनं तत्र तत्रोक्तम् । विश्वरूपाध्याये त्वैश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया । तच्च दर्शयित्वा उक्तवानसि मत्कर्मकृद्[गीता ११.५५] इत्यादि । अतोऽहमनयोरुभयोः

पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीत्यर्जुन उवाच

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१२.१॥

एवमित्यतीतानन्तरलोकेन उक्तमर्थं परामृशति मत्कर्मकृदित्यादिना । एवं सततयुक्ताः, नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः । ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति । ये चान्येऽपि त्यक्तसर्वेषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरम् । यद्धि करणगोचरं तद्व्यक्तमुच्यते, अञ्जेर्धातोस्तत्कर्मकत्वात् । इदं त्वक्षरं तद्विपरीतम्, शिष्टौ च उच्यमानैर्विशेषणैर्विशिष्टम्, तद्ये चापि
पर्युपासते, तेषामुभयेषां मध्ये के योगिवित्तमाः ? केऽतिशयेन योगविद इत्यर्थः ॥१२.१॥

श्रीभगवानुवाच ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु । तान् प्रति यद्वक्तव्यम्, तदुपरिष्टाद्वक्ष्यामः । ये त्वितरे

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥१२.२॥

मयि विश्वरूपे परमेश्वर आवेश्य समाधाय मनो ये भक्ताः सन्तः, मां सर्वयोगे वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिम्, नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेताः, ते मे मम मता अभिप्रेता युक्ततमा इति । नैरन्तर्येण हि ते मच्चित्ततयाहोरात्रमतिवाहयन्ति । अतो युक्तं तान् प्रति युक्ततमा इति वक्तुम् ॥१२.२॥

किमितरे युक्ततमा न भवन्ति ? न । किंतु तान् प्रति यद्वक्तव्यम्, तच्छृणु

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥१२.३॥

ये त्वक्षरमनिर्देश्यम्, अव्यक्तत्वादशब्दगोचरेति न निर्देष्टुं शक्यते, अतोऽनिर्देश्यम् । अव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते । उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनम्, तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं चाव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरम्, तन्मनसापि चिन्त्यम्, तद्विपरीतत्वादचिन्त्यमक्षरम्, कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटम् । कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके । तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवन्मायाव्याकृतादिशब्दवाच्यतया मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् [श्वेतू ४.१०], मम माया दुरत्यया [गीता ७.१४] इत्यादौ प्रसिद्धं यत्तत्कूटम्, तस्मिन् कूटे स्थितं कूटस्थं तदध्यक्षतया । अथवा, राशिरिव स्थितं कूटस्थमत एवाचलम् । यस्मादचलम्, तस्माद्ध्रुवम्, नित्यमित्यर्थः ॥१२.३॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥१२.४॥

संनियम्य सम्यक्नियम्य उपसंहृत्य इन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः । ते ये एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । न तु तेषां वक्तव्यं किंचित्मां ते प्राप्नुवन्तीति । ज्ञानी त्वात्मैव मे मतमिति ह्युक्तम् । न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥१२.४॥

किं तु

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥१२.५॥

क्लेशोऽधिकतरः । यद्यपि मत्कर्मादिपराणां क्लेशोऽधिक एव । क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तः । अव्यक्तासक्तचेतसामव्यक्त आसक्तं चेतो येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि यस्माद्या गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यते । अतः क्लेशोऽधिकतरः । अक्षरोपासकानां यद्वर्तनम्, तदुपरिष्टाद्वक्ष्यामः ॥१२.५॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥१२.६॥

ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यतालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव । केन ? योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥१२.६॥

तेषां किम् ?

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥१२.७॥

तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता । कुतः ? इत्याह मृत्युसंसारसागरान्मृत्युयुक्तः संसारो मृत्युसंसारः, स एव सागर इव सागरः, दुस्तरत्वात्, तस्मात्मृत्युसंसारसागरातहं तेषां समुद्धर्ता भवामि न चिरात् । किं तर्हि ? क्षिप्रमेव हे पार्थ, मयि आवेशितचेतसां मयि विश्वरूप आवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम् ॥१२.७॥

यत एवम्, तस्मात्

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥१२.८॥

मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय । मय्येवाध्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय । ततस्ते किं स्यादिति सृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यसि । एवातः शरीरपातादूर्ध्वम् । न संशयः, संशयोऽत्र न कर्तव्यः ॥ १२.८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥१२.९॥

अथ एवं यथावोचं तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं न शक्नोषि चेत्, ततः पश्चादभ्यासयोगेन । चित्तस्यैकस्मिनालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः । तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्व आप्तुं प्राप्तुम् । हे धनञ्जय ॥१२.९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।

मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१२.१०॥

अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि, तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमः मत्कर्मपरमः, मत्कर्मप्रधान इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥१२.१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥१२.११॥

अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वम्, तत्कर्तुमशक्तोऽसि, मद्योगम्, आश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगः, तमाश्रितः सन्, सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान् संयतचित्तः सनित्यर्थः ॥१२.११॥

इदानीं सर्वकर्मफलत्यागं स्तौति

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२.१२॥

श्रेयो हि प्रशस्यतरं ज्ञानम् । कस्मात्? विवेकपूर्वकादभ्यासात् । तस्मादपि ज्ञानाज्ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । एवं कर्मफलत्यागात्पूर्वविशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यात्, न तु कालान्तरमपेक्षते ।

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टम्, न प्रथममेव । अतश्च श्रेयो हि ज्ञानमभ्यासादित्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते, संपन्नसाधनानुष्ठानाशक्तौ अनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वम् ? यदा सर्वे प्रमुच्यन्त इति सर्वकामप्रहाणादमृतत्वमुक्तम् । तत्प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तकर्मणां फलानि । तत्त्यागे च विदुषो ध्याननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यमज्ञकर्मफलत्यागस्यास्तीति तत्सामान्यात्सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथागस्त्येन ब्राह्मणेन समुद्रः
पीत इतीदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात्स्तूयन्ते, एवं कर्मफलत्यागात्कर्मयोगस्य श्रेयः साधनत्वमभिहितम् ॥१२.१२॥

अत्र चात्मेश्वरभेदमाश्रित्य विश्वरूप ईश्वरे चेतःसमाधानलक्षणो योग उक्तः, ईश्वरार्थं कर्मानुष्ठानादि च । अथैतदप्यशक्तोऽसि [गीता १२.११] इत्यज्ञानकार्यसूचनान्नाभेददर्शिनोऽक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति । तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिम् । ते प्राप्नुवन्ति मामेव [गीता १२.४] इत्यक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वा, इतरेषां पारतन्त्र्यादीश्वराधीनतां दर्शितवान् तेषामहं समुद्धर्ता [गीता १२.७] इति । यदि हीश्वरस्यात्मभूतास्ते मता अभेददर्शित्वात्, अक्षरस्वरूपा एव त इति समुद्धरणकर्मवचनं तान् प्रत्यपेशलं स्यात् । यस्माच्चार्जुनस्यात्यन्तमेव हितैषी
भगवान् तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेव उपदिशति । न चात्मानमीश्वरं प्रमाणतो बुद्ध्वा कस्यचिद्गुणभावं जिगमिषति कश्चिद्, विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानामद्वेष्टा सर्वभूतानामित्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१२.१३॥

अद्वेष्टा सर्वभूतानां न द्वेष्टा, आत्मनो दुःखहेतुमपि न किंचिद्द्वेष्टि, सर्वाणि भूतान्यात्मत्वेन हि पश्यति । मैत्रो मित्रभावो मैत्री मित्रतया वर्तत इति मैत्रः । करुण एव च, करुणा कृपा दुःखितेषु दया, तद्वान् करुणः, सर्वभूताभयप्रदः, संन्यासीत्यर्थः । निर्ममो ममप्रत्ययवर्जितः । निरहंकारो निर्गताहंप्रत्ययः । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः । क्षमी क्षमावान्, आक्रुष्टोऽभिहतो वाविक्रिय एवास्ते

॥१२.१३॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१२.१४॥

संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभेऽलाभे च उत्पन्नालंप्रत्ययः । तथा गुणवल्लाभे विपर्यये च संतुष्टः । सततं योगी समाहितचित्तः । यतात्मा संयतस्वभावः । दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्यात्मतत्त्वविषये स दृढनिश्चयः । मय्यर्पितमनोबुद्धिः संकल्पविकल्पात्मकं मनः, अध्यवसायलक्षणा बुद्धिः, ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिः । य ईदृशो मद्भक्तः स मे प्रियः । प्रियो हि ज्ञानिनोऽत्यर्थमहं
स च मम प्रिय इति सप्तमेऽध्याये सूचितम्, तदिह प्रपञ्च्यते ॥१२.१४॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१२.१५॥

यस्मात्संन्यासिनो नोद्विजते नोद्वेगं गच्छति न सन्तप्यते न संक्षुभ्यति लोकः, तथा लोकान्नोद्विजते च यः, हर्षामर्षभयोद्वेगैर्हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तः । हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः । अमर्षोऽसहिष्णुता । भयं त्रासः । उद्वेग उद्विग्नता । तैर्मुक्तो यः स च मे प्रियः ॥१२.१५॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१२.१६॥

देहेन्द्रियविषयसंबन्धादिषु अपेक्षाविषयेषु अनपेक्षो निःस्पृहः । शुचिर्बाह्येन आभ्यन्तरेण च शौचेन संपन्नः । दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत्प्रतिपत्तुं समर्थः । उदासीनो न कस्यचित्मित्रादेः पक्षं भजते यः, स उदासीनो यतिः । गतव्यथो गतभयः । सर्वारम्भपरित्यागी आरभ्यन्तेति । आरम्भा इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वारम्भाः, तान् परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यः मद्भक्तः सः मे प्रियः ॥१२.१६॥

किं च
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१२.१७॥

यो न हृष्यतीष्टप्राप्तौ, न द्वेष्ट्यनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न चाप्राप्तं काङ्क्षति, शुभाशुभे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१२.१७॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१२.१८॥

समः शत्रौ च मित्रे च, तथा मानापमानयोः पूजापरिभवयोः, शीतोष्णसुखदुःखेषु समः । सर्वत्र च सङ्गविवर्जितः ॥१२.१८॥

किं च
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥१२.१९॥

तुल्यनिन्दास्तुतिः । निन्दा च स्तुतिश्च निन्दास्तुती । ते तुल्ये यस्य स तुल्यनिन्दास्तुतिः । मौनी मौनवान् संयतवाक् । संतुष्टः येन केनचित्शरीरस्थितिहेतुमात्रेण । तथा चोक्तम्

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदुः ॥ [म.भा. १२.२४५.१२] इति ।

किं च, अनिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽनिकेतः, नागारे इत्यादिस्मृत्यन्तरात् । स्थिरमतिः स्थिरा परमार्थविषया यस्य मतिः सः स्थिरमतिः । भक्तिमान्मे प्रियो नरः ॥१२.१९॥

अद्वेष्टा सर्वभूतानाम् [गीता १२.१३] इत्यादिनाक्षरोपासकानां निवृत्तसर्वेषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंह्रियते

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥१२.२०॥

ये तु संन्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं च तत्, अमृतत्वहेतुत्वात्, इदं यथोक्तम्, अद्वेष्टा सर्वभूतानामित्यादिना पर्युपासतेऽनुतिष्ठन्ति श्रद्दधानाः सन्तः मत्परमाः यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमाः, मद्भक्ताश्चोत्तमां परमार्थज्ञानलक्षणां भक्तिमाश्रिताः, तेऽतीव मे प्रियाः । प्रियो हि ज्ञानिनोऽत्यर्थम् [गीता ७.१८] इति यत्सूचितं तत्व्याख्यायेहोपसंहृतं भक्तास्तेऽतीव मे प्रिया इति । यस्माद्धर्म्यामृतमिदं यथोक्तमनुतिष्ठन् भगवतो विष्णोः
परमेश्वरस्यातीव प्रियो भवति, तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणेति वाक्यार्थः ॥१२.२०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
द्वादशोऽध्यायः ॥

## त्रयोदशोऽध्यायः

सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य त्रिगुणात्मिकाष्टधा भिन्नापरा संसारहेतुत्वात्, परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते । अतीतानन्तराध्याये च अद्वेष्टा सर्वभूतानां [गीता १२.१३] इत्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां सन्न्यासिनां निष्ठा यथा ते वर्तन्त इत्येतदुक्तम् । केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्त्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका
सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते । सोऽयं सङ्घात इदं शरीरम् । तदेतद्भगवानुवाच

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१३.१॥

इदमिति सर्वनाम्नोक्तं विशिनष्टि शरिरमिति । हे कौन्तेय ! क्षतत्राणात्क्षयात्क्षरणात्, क्षेत्रवद्वास्मिन् कर्मफलनिष्पत्तेः क्षेत्रमिति । इतिशब्द एवंशब्देदार्थकः । क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानाति, आपादतलमस्तकं ज्ञानेन विषयीकरोति, स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशः, तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्दः एवंशब्दपदार्थक एव पूर्ववत् ।

क्षेत्रज्ञः इत्येवमाहुः । के ? तद्विदस्तौ
क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥१३.१॥

एवं क्षेत्रक्षेत्रज्ञौ उक्तौ । किमेतावन्मात्रेण ज्ञानेन ज्ञातव्यौ? इति नेत्युच्यते

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥१३.२॥

क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तः । तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः । हे भारत ! यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति, तस्मात्क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते, तज्ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रायः ममेश्वरस्य
विष्णोः ॥

ननु सर्वक्षेत्रेष्वेक एवेश्वरः । नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्, तत ईश्वरस्य संसारित्वं प्राप्तम् । ईश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसङ्गः । तच्चोभयमनिष्टम्, बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्, प्रत्यक्षादिप्रमाणविरोधाच्च । प्रत्यक्षेण तावत्सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते । जगद्वैचित्र्योपलब्धे च धर्माधर्मनिमित्तः संसारोऽनुमीयते । सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे । न । ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता [Kअठू १.२.४] तथा तयोर्विद्याविद्याविषययोः
फलभेदोऽपि विरुद्धो निर्दिष्टः श्रेयश्च प्रेयश्च [Kअठू १.२.२] इति । विद्याविषयः श्रेयः, प्रेयस्त्वविद्याकार्यमिति । तथा च व्यासः द्वाविमावथ पन्थानौ [म.भा. १२.२४१.६] इत्यादि, इमौ द्वावेव पन्थानावित्यादि च । इह च द्वे निष्ठे उक्ते । अविद्या च सह कार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते ।

श्रुतयस्तावत् इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः [Kएनऊ २.५],
तमेवं विद्वानमृत इह भवति [टैत्ता ३.१२], नान्यः पन्था विद्यतेऽयनाय [श्वेतू ३.८] विद्वान्न बिभेति कुतश्चन [टैत्तू २.९] ।

अविदुषस्तु अथ तस्य भयं भवति [टैत्तू २.७], अविद्यायामन्तरे वर्तमानाः [Kअठू १.२.५], ब्रह्म वेद ब्रह्मैव भवति [ुण्डू ३.२.९], अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम् [बृहदारण्यकोपनिषद् १.४.१०] । आत्मविद्यः स इदं सर्वं भवति [बृहदारण्यकोपनिषद् १.४.१०], यदा चर्मवत्[श्वेतू ६.२०] इत्याद्याः सहस्रशः ।

स्मृतयश्च अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः [गीता ५.२५], इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः [गीता ५.१९], समं पश्यन् हि सर्वत्र [गीता १३.२९] इत्याद्याः ।

न्यायतश्च
सर्पान् कुशाग्राणि तथोदपानं
ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने
फलं पश्य यथाविशिष्टम् ॥ [म.भा. १२.२०१.१७] इति ।

तथा च देहादिषु आत्मबुद्धिरविद्वान् रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते । देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः । तत्रैवं सति, क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति, यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मसु आत्मभावो निश्चितोऽविद्याकृतः, यथा स्थाणौ पुरुषनिश्चयः । न चैतावता पुरुषधर्मः स्थाणोर्भवति, स्थाणुधर्मो वा पुरुषस्य । तथा न चैतन्यधर्मो
देहस्य, देहधर्मो वा चेतनस्य सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तः । अविद्याकृतत्वाविशेषात्, जरामृत्युवत् ।

न, अतुल्यत्वात् । इति चेत् स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रान्योन्यस्मिन्नध्यस्तावविद्यया । देहात्मनोस्तु ज्ञेयज्ञात्रोरेव इतरेतराध्यासः, इति न समो दृष्टान्तः ।

अतो देहधर्मो ज्ञेयोऽपि ज्ञातुरात्मनो भवतीति चेत्, न । अचैतन्यादिप्रसङ्गात् । यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छादयो ज्ञातुर्भवन्ति, तर्हि, ज्ञेयस्य क्षेत्रस्य धर्माः केचिदात्मनो भवन्त्यविद्याध्यारोपिताः, जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वक्तव्यः । न भवन्तीत्यस्त्यनुमानम् अविद्याध्यारोपितत्वाज्जरामरणादिवदिति, हेयत्वात्, उपादेयत्वाच्चेत्यादि ।

तत्रैवं सति, कर्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्थो ज्ञातर्यविद्ययाध्यारोपित इति, न तेन ज्ञातुः किंचिद्दुष्यति । यथा बालैरध्यारोपितेनाकाशस्य तलमलिनत्वादिना ।

एवं च सति, सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगन्धमात्रमपि नाशङ्कयम् । न हि क्वचिदपि लोकेऽविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः ।

यत्तूक्तम् न समो दृष्टान्त इति, तदसत् । कथम् ? अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम् । तन्न व्यभिचरति । यत्तु ज्ञातरि व्यभिचरतीति मन्यसे, तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः ॥

अविद्यावत्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेत्, न । अविद्यायास्तामसत्वात् । तामसो हि प्रत्ययः, आवरणात्मकत्वादविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा । विवेकप्रकाशभावे तदभावात्तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्य उपलब्धेः ॥

अत्राह एवं तर्हि ज्ञातृधर्मोऽविद्या । न । करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः । यत्तु मन्यसे ज्ञातृधर्मोऽविद्या, तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम् । तत्र यदुक्तमीश्वर एव क्षेत्रज्ञः, न संसारीत्येतदयुक्तमिति, तन्न । यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात् । न विपरीतादिग्रहणं तन्निमित्तं वा तैमिरिकत्वादिदोषो ग्रहीतुः, चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा । तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचित्भवितुम्
अर्हन्ति, न ज्ञातुः क्षेत्रज्ञस्य । संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवन्न ज्ञातृधर्मत्वम् । संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम् । सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात् । आत्मनो यदि क्षेत्रज्ञस्याग्न्युष्णवत्स्वो धर्मः, ततो न कदाचिदपि तेन वियोगः स्यात् । अविक्रियस्य च व्योमवत्सर्वगतस्यामूर्तस्य आत्मनः केनचित्संयोगवियोगानुपपत्तेः, सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वम् । अनादित्वान्निर्गुणत्वाद्[गीता १३.३२] इत्यादीश्वरवचनाच्च ॥

नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति चेत्, न । सर्वैरभ्युपगतत्वात् । सर्वैर्ह्यात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्तव्यो भवति । कथमभ्युपगत इति ? मुक्तात्मनां हि संसारसंसारित्वव्यवहाराभावः सर्वैरेव आत्मवादिभिरिष्यते । न च तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता । तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति, शास्त्रानर्थक्यं भवतु । अविद्याविषये चार्थवत्त्वम् यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वम्, न मुक्तावस्थायाम्, एवम् ॥

नन्वात्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां सर्वेषाम् । अतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यात् । अद्वैतिनां पुनः, द्वैतस्यापरमार्थत्वात्, अविद्याकृतत्वाद्बन्धावस्थायाश्चात्मनोऽपरमार्थत्वे निर्विषयत्वात्, शास्त्राद्यानर्थक्यमिति चेत्, न । आत्मनोऽवस्थाभेदानुपपत्तेः । यदि तावतात्मनो बन्धमुक्तावस्थे, युगपत्स्याताम्, क्रमेण वा । युगपत्तावत्विरोधान्न संभवतः स्थितिगती इवैकस्मिन् । क्रमभावित्वे च, निर्निमित्तत्वं सनिमित्तत्वं वा ? निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गः । सनिमित्तत्वे च स्वतोऽभावातपरमार्थत्वप्रसङ्गः । तथा च सत्यभ्युपगमहानिः ।

किं च, बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्या, अनादिमत्यन्तवती च । तच्च प्रमाणविरुद्धम् । तथा मोक्षावस्थादिमत्यनन्ता च प्रमाणविरुद्धैवाभ्युपगम्यते । न चावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यम् । अथानित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यते । अतो द्वैतिनामपि शास्त्रानर्थक्यादिदोषोऽपरिहार्य एव । इति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः ॥

न च शास्त्रानर्थक्यम्, यथाप्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य । अविदुषां हि फलहेत्वोरनात्मनोरात्मदर्शनम्, न विदुषाम् । विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति, तयोरहमित्यात्मदर्शनानुपपत्तेः । न ह्यत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति । किमुत विवेकी । तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति ।
न हि "देवदत्त, त्वमिदं कुरु" इति कस्मिंश्चित्कर्मणि नियुक्ते, "विष्णुमित्रोऽहं नियुक्तः" इति तत्रस्थो नियोगं सृण्वन्नपि प्रतिपद्यते । वियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिः । तथा फलहेत्वोरपि ॥

ननु प्राकृतसंबन्धापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविषया फलहेतुभ्यामन्यात्मविषयदर्शनेऽपि सति इष्टफलहेतौ प्रवर्तितोऽस्मि, अनिष्टफलहेतोश्च निवर्तितोऽस्मीति । यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिः । न । व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् । प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते, न पूर्वम् । तस्माद्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम् ॥

ननु स्वर्गकामो यजेत [आप्.श्र्.ष्. १०.२.१] न कलञ्जं भक्षयेदित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ, केवलदेहाद्यात्मदृष्टीनां च । अतः कर्तुरभावाच्छास्त्रानर्थक्यमिति चेत्, न । यथाप्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते । तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्तते । यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्यानुमितात्मास्तित्व आत्मविशेषानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रवर्तते । इति सर्वेषां न प्रत्यक्षम् । अतो न शास्त्रानर्थक्यम् ॥

विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेत्, न । कस्यचिदेव विवेकोपपत्तेः । अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्यात्, यथेदानीम् । न च विवेकिनमनुवर्तन्ते मूढाः, रागादिदोषतन्त्रत्वात्प्रवृत्तेः, अभिचरणादौ च प्रवृत्तिदर्शनात्, स्वाभाव्याच्च प्रवृत्तेः । स्वभावस्तु प्रवर्तते [गीता ५.१४] इति हि उक्तम् ॥

तस्मातविद्यामात्रं संसारो यथादृष्टविषय एव । न क्षेत्रज्ञस्य केवलस्याविद्या तत्कार्यं च । न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम् । न ह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकम् । तथाविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोति । अतश्चेदमुक्तम् क्षेत्रज्ञं चापि मां विद्धि । अज्ञानेनावृतं ज्ञानम् [गीता ५.१५] इति च ॥

अथ किमिदं संसारिणामिवाहमेवं ममैवेदमिति पण्डितानामपि ? सृणु । इदं तत्पाण्डित्यम्, यत्क्षेत्र एवात्मदर्शनम् । यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोगं कर्म वाकाङ्क्षेयुर्मम स्यादिति । विक्रियैव भोगकर्मणी । अथैवं सति, फलार्थित्वादविद्वान् प्रवर्तते । विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते ॥

इदं चान्यत्पाण्डित्यं कस्यचिदस्तु क्षेत्रज्ञ ईश्वर एव । क्षेत्रं चान्यत्क्षेत्रज्ञस्यैव विषयः । अहं तु संसारी सुखी दुःखी च । संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन, ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्चैवं बुध्यते, यश्च बोधयति, नासौ क्षेत्रज्ञ इति । एवं मन्वानो यः स पण्डितापशब्दः । संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति । आत्महा स्वयं मूढोऽन्यां च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वात्,
श्रुतहानिमश्रुतकल्पनां च कुर्वन् । तस्मातसंप्रदायवित्सर्वशास्त्रविदपि मूर्खवदेव उपेक्षणीयः ॥

यत्तूक्तमीश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति । क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इति । एतौ दोषौ प्रत्युक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति । कथम् ? अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति । तथा च दृष्टन्तो दर्शितः मरीच्यम्भसा ऊषरदेशो न पङ्कीक्रियत इति । संसारिणोऽभावात्संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः ॥

ननु अविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषः । तत्कृतं च सुखित्वदुःखित्वादि प्रत्यक्षमुपलभ्यते इति चेत्, न । ज्ञेयस्य क्षेत्रधर्मत्वात्, ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत्किंचित्क्षेत्रज्ञस्य दोषजातमविद्यमानमासञ्जयसि, तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव, न क्षेत्रज्ञधर्मत्वम् । न च तेन क्षेत्रज्ञो दुष्यति, ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः । यदि हि संसर्गः स्यात्, ज्ञेयत्वमेव नोपपद्येत । यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखित्वादि च कथं भोः
प्रत्यक्षमुपलभ्यते । कथं वा क्षेत्रज्ञधर्मः । ज्ञेयं च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधारिते, अविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यतेऽविद्यामात्रावष्टम्भात्केवलम् ॥

अत्राह साविद्या कस्य ? इति । यस्य दृश्यते तस्यैव । कस्य दृश्यते ? इति । अत्रोच्यते अविद्या कस्य दृश्यते इति प्रश्नो निरर्थकः । कथम् ? दृश्यते चेदविद्या, तद्वन्तमपि पश्यसि । न च तद्वत्युपलभ्यमाने सा कस्य ? इति प्रश्नो युक्तः । न हि गोमति उपलभ्यमाने गावः कस्य ? इति प्रश्नोऽर्थवान् भवति ।

ननु विषमो दृष्टान्तः । गवां तद्वतश्च प्रत्यक्षत्वात्तत्संबन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः । न तथाविद्या तद्वांश्च प्रत्यक्षौ, यतः प्रश्नो निरर्थकः स्यात् । अप्रत्यक्षेणाविद्यावताविद्यासंबन्धे ज्ञाते, किं तव स्यात्? अविद्याया अनर्थहेतुत्वात्परिहर्तव्या स्यात् । यस्याविद्या, स तां परिहरिष्यति ।

ननु ममैवाविद्या । जानासि तर्ह्यविद्यां तद्वन्तं च आत्मानम् । जानामि, न तु प्रत्यक्षेण । अनुमानेनश्चेज्जानासि, कथं संबन्धग्रहणम् ? न हि

तव ज्ञातुः ज्ञेयभूतयाविद्यया तत्काले संबन्धो ग्रहीतुं शक्यते, अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात् । न च ज्ञातुरविद्याया च संबन्धस्य यो ग्रहीता, ज्ञानं चान्यत्तद्विषयं संभवति । अनवस्थाप्राप्तेः । यदि ज्ञात्रापि ज्ञेयसंबन्धो ज्ञायते, अन्यो ज्ञाता कल्प्यः स्यात्, तस्याप्यन्यः, तस्याप्यन्यः इत्यनवस्थापरिहार्या । यदि पुनरविद्या ज्ञेया, अन्यद्वा ज्ञेयं ज्ञेयमेव । तथा ज्ञातापि ज्ञातैव, न ज्ञेयं भवति । यदा चैवम्, अविद्यादुःखित्वाद्यैर्
न ज्ञातुः क्षेत्रज्ञस्य किंचित्दुष्यति ॥

ननु अयमेव दोषः, यत्दोषवत्क्षेत्रविज्ञातृत्वम् । न च विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् । यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारः, तद्वत् । यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितः अविद्याध्यारोपित एव क्रियाकारकादिरात्मन्युपचर्यते । तथा तत्र तत्र य एनं वेत्ति हन्तारम् [गीता २.१९], प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः [गीता ३.२७], नादत्ते कस्यचित्पापम् [गीता ५.१५] इत्यादिप्रकरणेषु दर्शितः । तथैव च व्याख्यातमस्माभिः । उत्तरेषु च प्रकरणेषु दर्शयिष्यामः ॥

हन्त ! तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावे, अविद्यया चाध्यारोपितत्वे, कर्माण्यविद्वत्कर्तव्यान्येव, न विदुषामिति प्राप्तम् । सत्यमेवं प्राप्तम्, एतदेव च न हि देहभृता शक्यमित्यत्र दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चनेन, इति उपसंह्रियते ॥१३.२॥

इदं शरीरम् [गीता १३.२] इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत्क्षेत्रं यच्चेत्यादि, व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥१३.३॥

यन्निर्दिष्टमिदं शरीरमिति तत्तच्छब्देन परामृशति । यच्च इदं निर्दिष्टं क्षेत्रं तत्यादृक्यादृशं स्वकीयैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्विकारि यो विकारो यस्य तत्यद्विकारि, यतो यस्माच्च यत्, कार्यमुत्पद्यते इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च । तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु । श्रुत्वावधारय इत्यर्थः ॥१३.३॥

तत्क्षेत्रक्षेत्रज्ञयाथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥१३.४॥

ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितम् । छन्दोभिश्छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाभावैर्नानाप्रकारैः पृथग्विवेकतो गीतम् । किं च, ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायत इति तानि पदान्युच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयाथात्म्यं गीतमित्यनुवर्तते । आत्मेत्येवोपासीत इत्येवमादिभिर्ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्निःसंशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥१३.४॥

स्तुत्याभिमुखीभूतायार्जुनायाह भगवान्

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥१३.५॥

महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमेव च, न व्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिर्मम

माया दुरत्यया इत्युक्तम् । एवशब्दः प्रकृत्यवधारणार्थ एतावत्येवाष्टधा भिन्ना प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । इन्द्रियाणि दश, श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि । वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि । तानि दश । एकं च । किं तत्? मन एकादशं संकल्पाद्यात्मकम् । पञ्च चेन्द्रियगोचराः
शब्दादयो विषयाः । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥१३.५॥

अथेदानीमात्मगुणाः इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव, न तु क्षेत्रज्ञस्येत्याह भगवान्

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥१३.६॥

इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान् पूर्वम्, पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति । सेयमिच्छान्तःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषः, यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान्, पुनस्तज्जातीयमर्थमुपलभमानस्तं द्वेष्टि । सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नसत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकम् । ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेन्द्रियाणां संहतिः । तस्यामभिव्यक्तान्तःकरणवृत्तिः, तप्त इव लोहपिण्डेऽग्निः
। आत्मचैतन्याभासरसविद्धा चेतना । सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्ययावसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते । सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणम् । यत उक्तमुपसंहरति एतदिति । एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिना उदाहृतमुक्तम् ॥१३.६॥

यस्य क्षेत्रभेदजातस्य संहतिः इदं शरीरं क्षेत्रम् [गीता १३.२] इत्युक्तम् । तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् । क्षेत्रज्ञो वक्ष्यमाणविशेषणः यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति, तं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान् । अधुना तु तज्ज्ञानसाधनगणममानित्वादिलक्षणम्, यस्मिन् सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति, यत्परः संन्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं
विदधाति भगवान्

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥१३.७॥

अमानित्वं मानिनो भावः मानित्वमात्मनो श्लाघनम्, तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वम्, तदभावोऽदम्भित्वम् । अहिंसा हिंसनं प्राणिनामपीडानम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनम् । अन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावः, मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्य
आत्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनि
ग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्ग एव निरोध आत्मविनिग्रहः ॥१३.७॥

किं च
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥१३.८॥

इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम् । अनहंकारोऽहंकाराभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनम् । जन्मनि गर्भवासयोनिद्वारनिःसरणं दोषः, तस्यानुदर्शनमालोचनम् । तथा मृत्यौ दोषानुदर्शनम् । तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनम् । तथा
दुःखेषु अध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम् । दुःखं जन्म, दुःखं मृत्युः, दुःखं

जरा, दुःखं व्याधयः । दुःखनिमित्तत्वाज्जन्मादयो दुःखम्, न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनाद्देहेन्द्रियादिविषयभोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥१३.८॥

किं च
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥१३.९॥

असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रम्, तदभावोऽसक्तिः । अनभिष्वङ्गोऽभिष्वङ्गाभावः । अभिष्वङ्गो नाम आसक्तिविशेष एवानन्यात्मभावनालक्षणः । यथान्यस्मिन् सुखिनि दुःखिनि वाहमेव सुखी, दुःखी च, जीवति मृते वाहमेव जीवामि मरिष्यामि चेति । क्व ? इत्याह पुत्रदारगृहादिषु । पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु । तच्चोभयं ज्ञानार्थत्वाज्ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता । क्व ? इष्टानिष्टोपपत्तिष्व्
इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता । इष्टोपपत्तिषु न हृष्यति, न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥१३.९॥

किं च
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१३.१०॥

मयि चेश्वरेऽनन्ययोगेन अपृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्ति, अतः स एव नो गतिरित्येवं निश्चिताव्यभिचारिणी बुद्धिरनन्ययोगः, तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी । सा च ज्ञानम् । विविक्तदेशसेवित्वम् । विविक्तः स्वभावतः संस्कारेण वाशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशः, तं सेवितुं शीलमस्येति विविक्तदेशसेवी, तद्भावो विविक्तदेशसेवित्वम् । विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्ततः आत्मादिभावना विविक्त उपजायते । अतो विवक्तदेशसेवित्वं ज्ञानमुच्यते । अरतिररमणं जनसंसदि । जनानां प्राकृतानां
संस्कारशून्यानामविनीतानां संसत्समवायो जनसंसत् । न संस्कारवतां विनीतानां संसत् । तस्या ज्ञानोपकारकत्वात् । अतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वाज्ज्ञानम् ॥१३.१०॥

किं च
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥१३.११॥

अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानम्, तस्मिन्नित्यभावो नित्यत्वम् । अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानम्, तस्यार्थो मोक्षः संसारोपरमः । तस्यालोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण । मानित्वं दम्भित्वं हिंसा क्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय, संसारप्रवृत्तिकारणत्वादिति ॥१३.११॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किम् ? इत्याकाङ्क्षायामाह

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१३.१२॥

ननु यमाः नियमाश्चामानित्वादयः । न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचित्वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते, यथा घटविषयेण ज्ञानेनाग्निः । नैष दोषः । ज्ञाननिमित्तत्वाज्ज्ञानमुच्यत इति ह्यवोचाम । ज्ञानसहकारिकारणत्वाच्च । ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावत्वक्ष्यामि । किंफलं तत्? इति प्रोचनेन श्रोतुरभिमुखीकरणायाह यज्ज्ञेयं ज्ञात्वामृतममृतत्वमश्नुते, न पुनर्म्रियत
इत्यर्थः । अनादिमतादिरस्यास्तीति आदिमत्, नादिमदनादिमत् । किं तत्? परं निरतिशयं ब्रह्म, ज्ञेयमिति प्रकृतम् ।

अत्र केचितनादि मत्परमिति पदं छिन्दन्ति, बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति । सत्यमेवमपुनरुक्तं स्यात् । अर्थश्चेत्संभवति । न त्वर्थः संभवति, ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषित्वान्न सत्तन्नासदुच्यते इति । विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम् । तस्मात्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगो श्लोकपूरणार्थः । अमृतत्वफलं ज्ञेयं मयोच्यत इति प्रोचनेनाभिमुखीकृत्याह न सत्तज्ज्ञेयमुच्यते
इति नाप्यसत्तदुच्यते ॥

ननु महता परिकरबन्धेन कण्ठरवेणोद्घुष्य ज्ञेयं प्रवक्ष्यामीति, अननुरूपमुक्तं न सत्तन्नासदुच्यत इति । न, अनुरूपमेवोक्तम् । कथम् ? सर्वासु ह्युपनिषत्सु ज्ञेयं ब्रह्म नेति नेति [बृहदारण्यकोपनिषद् २.३.६] अस्थूलमनणु [बृहदारण्यकोपनिषद् ३.८.८] इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते, नेदं तदिति वाचोऽगोचत्वात् ॥

ननु न तदस्ति, यद्वस्त्वस्तिशब्देन नोच्यते । अथास्तिशब्देन नोच्यते, नास्ति तज्ज्ञेयम् । विप्रतिषिद्धं च ज्ञेयं तदस्तिशब्देन नोच्यते इति च । न तावन्नास्ति, नास्तिबुद्ध्यविषयत्वात् ॥

ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव । तत्रैवं सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । न, अतीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धीन्द्रियगम्यं वस्तु घटादिकम्, तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते ॥

यत्तूक्तम् विरुद्धमुच्यते, ज्ञेयं तन्न सत्तन्नासदुच्यत इति । न विरुद्धम्, अन्यदेव तद्विदितादथो अविदितादधि [Kएनऊ १.३] इति श्रुतेः । श्रुतिरपि विरुद्धार्था इति चेत् यथा यज्ञाय शालामारभ्य यज्ञं को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति [टैत्त्स्६.१.१] इत्येवमिति चेत्, न । विदिताविदिताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात्यद्यमुष्मिनित्यादि तु विधिशेषोऽर्थवादः । उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यत इति ।

सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणसव्यपेक्षार्थं प्रत्याययति । नान्यथा, अदृष्टत्वात् । तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतः । न तु ब्रह्म जातिमत्, अतो न सदादिशब्दवाच्यम् । नापि गुणवत्, येन गुणशब्देनोच्येत, निर्गुणत्वात् । नापि क्रियाशब्दवाच्यं निष्क्रियत्वान्निष्कलं निष्क्रियं शान्तम् [श्वेतू ६.१९] इति श्रुतेः । न च संबन्धी, एकत्वात् । अद्वयत्वादविषयत्वादात्मत्वाच्च न केनचित्, शब्देनोच्यत इति युक्तम् । यतो
वाचो निवर्तन्ते [टैत्तू २.९] इत्यादिश्रुतिभिश्च ॥१३.१२॥

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयन् तदाशङ्कानिवृत्त्यर्थमाह

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३.१३॥

सर्वतः पाणिपादं सर्वतः पाणयः पादाश्चास्येति सर्वतः पाणिपादं तज्ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञस्यास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्य, इति तदपनयनेन ज्ञेयत्वमुक्तं न सत्तन्नासदुच्यते इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्य उच्यते सर्वतः पाणिपादमित्यादि । तथा हि संप्रदायविदां वचनम् अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते
इति । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येति उपचारत

उच्यन्ते । तथा व्याख्येयमन्यत् । सर्वतः पाणिपादं तज्ज्ञेयम् । सर्वतोऽक्षिशिरोमुखं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमत् । श्रुतिः श्रवणेन्द्रियम्, तत्यस्य तत्श्रुतिमत् । लोके प्राणिनिकाये । सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥१३.१३॥

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का मा भूदित्येवमर्थः श्लोकारम्भः

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१३.१४॥

सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यानि, अन्तःकरणे च बुद्धिमनसी, ज्ञेयोपाधित्वस्य तुल्यत्वात्, सर्वेन्द्रियग्रहणेन गृह्यन्ते । अपि च, अन्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामपि उपाधित्वमित्यतोऽन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासते इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः । ध्यायतीव लेलायतीव [बृहदारण्यकोपनिषद् ४.३.७] इति श्रुतेः ।

कस्मात्पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यतः आह सर्वेन्द्रियविवर्जितम्, सर्वकरणरहितमित्यर्थः । अतो न करणव्यापारैः व्यापृतं तज्ज्ञेयम् । यस्त्वयं मन्त्रः अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स सृणोत्यकर्णः [श्वेतू ३.१९] इत्यादिः । स सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत्तज्ज्ञेयमित्येवं प्रदर्शनार्थः, न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः । अन्धो मणिमविन्दद्[टैत्ता १.११] इत्यादिमन्त्रार्थवत्तस्य मन्त्रस्यार्थः । यस्मात्सर्वकरणवर्जितं ज्ञेयम्, तस्मादसक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवम्, तथापि सर्वभृच्चैव । सदास्पदं
हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत्सर्वं बिभर्तीति । स्यादिदं चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वारम् निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तज्ज्ञेयम्, तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ च तज्ज्ञेयमित्यर्थः ॥१३.१४॥

किं च
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१३.१५॥

बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवाववधिं कृत्वा बहिरुच्यते । तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वा अन्तरुच्यते । बहिरन्तश्चेत्युक्ते मध्येऽभावे प्राप्ते, इदमुच्यते अचरं चरमेव च, यच्चराचरं देहाभासमपि तदेव ज्ञेयं, यथा रज्जुसर्पाभासः ।

यद्यचरं चरमेव च स्यात्व्यवहारविषयं सर्वं ज्ञेयम्, किमर्थमिदमिति सर्वैर्न विज्ञेयम्? इत्युच्यते सत्यं सर्वाभासं तत् । तथापि व्योमवत्सूक्ष्मम् । अतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां तु, आत्मैवेदं सर्वम् [बृहदारण्यकोपनिषद् ७.२५.२] ब्रह्मैवेदं सर्वम् [बृहदारण्यकोपनिषद् २.५.१] इत्यादिप्रमाणतो नित्यं विज्ञातम् । अविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वात् । अन्तिके च तत्, आत्मत्वाद्विदुषाम् ॥१३.१५॥

किं च
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१३.१६॥

अविभक्तं च प्रतिदेहं व्योमवत्तदेकम् । भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वात् । भूतभर्तृ च भूतानि बिभर्ति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १३.१६॥

किं च, सर्वत्र विद्यमानमपि सन्नोपलभ्यते चेत्, ज्ञेयं तमस्तर्हि ? न । किं तर्हि ?

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१३.१७॥

ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषेद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते, येन सूर्यस्तपति तेजसेद्धः [तैत्तBर्३.१२.९], तस्य भासा सर्वमिदं विभाति [श्वेतू ६.१४] ईत्यादिश्रुतिभ्यः । स्मृते च इहैव यदादित्यगतं तेजः [गीता १५.१२] इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते । ज्ञानादेर्दुःसंपादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानमममानित्वादि । ज्ञेयं ज्ञेयं यत्तत्प्रवक्ष्यामीत्य्[गीता १३.१३] आदिनोक्तम् । ज्ञानगम्यं ज्ञेयमेव ज्ञातं सज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं
विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥१३.१७॥

यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१३.१८॥

इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं, तथा ज्ञानमममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं, ज्ञेयं च ज्ञेयं यत्ततित्यादि तमसः परमुच्यते इत्येवमन्तमुक्तं समासतः संक्षेपतः । एतावान् सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन् सम्यग्दर्शने कोऽधिक्रियते ? इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान् वासुदेवः इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय, मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै
मद्भावाय उपपद्यते, मोक्षं गच्छति ॥१३.१८॥

तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे । एतद्योनीनि भूतानि [गीता ७.७] इति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१३.१९॥

प्रकृतिं पुरुषं चैव ईश्वरस्य प्रकृती । तौ प्रकृतिपुरुषौ उभावप्यनादि विद्धि, न विद्यते आदिर्ययोस्तौ अनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वेऽनादी सत्यौ संसारस्य कारणम् ॥

नादी अनादी इति तत्पुरुषसमासं केचित्वर्णयन्ति । तेन हि किलेश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगत्, नेश्वरस्य जगतः कर्तृत्वम् । तदसत् । प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात्, संसारस्य निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गात्शास्त्रानर्थक्यप्रसङ्गाद्बन्धमोक्षाभावप्रसङ्गाच्च । नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत् । कथम् ? विकारांश्च गुणांश्चैव । वक्ष्यमाणान् विकारान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धि जानीहि प्रकृतिसंभवान् । प्रकृतिर्
ईश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया । सा संभवो येषां विकाराणां गुणानां च तान् विकारान् गुणांश्च विद्धि प्रकृतिसंभवान् प्रकृतिपरिणामान् ॥१३.१९॥

के पुनस्ते विकाराः गुणाश्च प्रकृतिसंभवाः ? इत्याह

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥१३.२०॥

कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्यारम्भकाणि भूतानि पञ्च विषयाश्च प्रकृतिसंभवाः विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते । गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन् कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः ।

कार्यकारणकर्तृत्वे इत्यस्मिन्नपि पाठे, कार्यं यत्यस्य परिणामस्तत्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्वे इति । अथवा, षोडाश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणान्युच्यन्ते तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते, आरम्भकत्वेनैव ।

पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषो जीवः क्षेत्रज्ञो भोक्ता इति पर्यायः, सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते । कथं पुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यते ? इत्यत्रोच्यते कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे, पुरुषस्य च चेतनस्यासति तदुपलब्धृत्वे, कुतः संसारः स्यात्? यदा पुनः कार्यकरणसुखदुःखस्वरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य
भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्, तदा संसारः स्यादिति । अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तम्, तद्युक्तम् । कः पुनरयं संसारो नाम ? सुखदुःखसंभोगः संसारः । पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥१३.२०॥

यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥१३.२१॥

पुरुषो भोक्ता प्रकृतिस्थः । प्रकृतावविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृतिस्थः । प्रकृतिमात्मत्वेन गतः इत्येतत् । हि यस्मात् । तस्माद्भुङ्क्ते उपलभत इत्यर्थः । प्रकृतिजान् प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् सुखी, दुःखी, मूढः, पण्डितोऽहमित्येवम् । सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानं कारणं यस्य पुरुषस्य जन्मनः । स यथाकामो भवति तत्क्रतुर्भवति [बृहदारण्यकोपनिषद् ४.४.५] इत्यादि श्रुतेः । तदेतदाह कारणं
हेतुर्गुणसङ्गो गुणेषु सङ्गोऽस्य पुरुषस्य भोक्तुः सदसद्योनिजन्मसु । सत्यश्चासत्यश्च योनयः सदसद्योनयस्तासु सदसद्योनुषु जन्मानि सदसद्योनिजन्मानि, तेषु सदसद्योनिजन्मषु विषयभूतेषु कारणं गुणसङ्गः । अथवा, सदसद्योनिजन्मसु अस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम् । सद्योनयो देवादियोनयः । असद्योनयः पश्वादियोनयः । सामर्थ्यात्सदसद्योनयः मनुष्ययोनयोऽप्यविरुद्धाः द्रष्टाव्याः ॥

एतदुक्तं भवति प्रकृतिस्थत्वाख्याविद्या गुणेषु च सङ्गः कामः संसारस्य कारणमिति । तच्च परिवर्जनाय उच्यते । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयं यज्ज्ञात्वामृतमश्नुते [गीता १२.१३] इति । उक्तं चान्यापोहेनातद्धर्माध्यारोपेण च ॥१३.२१॥

तस्यैव पुनः साक्षान्निर्देशः क्रियते

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥१३.२२॥

उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयमव्यापृतः । यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशलः

ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता, तद्वच्च कार्यकरणव्यापारेषु सव्यापाराणां सामीप्येन द्रष्टा उपद्रष्टा । अथवा, देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारः । तेषां बाह्यो द्रष्टा देहः । तत आरभ्यान्तरतमश्च प्रत्यक्समीपे आत्मा द्रष्टा, यतः परोऽन्तरतमो नास्ति द्रष्टा । सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् । यज्ञोपद्रष्टृअवद्वा सर्वविषयीकरणाद्
उपद्रष्टा । अनुमन्ता च । अनुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्तानुमन्ता च । अथवा, अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते, तेनानुमन्ता । अथवा, प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता ।

भर्ता । भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत्स्वरूपधारणम्, तच्चैतन्यात्मकृतमेवेति भर्ता आत्मेत्युच्यते । भोक्ता । अग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्ते इति भोक्ता आत्मोच्यते । महेश्वरः । सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः । परमात्मा । देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा । सोऽन्तः परमात्मा इत्यनेन शब्देन
चाप्युक्तः कथितः श्रुतौ । क्वासौ ? अस्मिन् देहे पुरुषः परोऽव्यक्तात् । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः [गीता १३.३] इति यो वक्ष्यमाणः क्षेत्रज्ञं चापि मां विद्धि [गीता १३.२] इति उपन्यस्तो व्याख्यायोपसंहृतश्च ॥१३.२२॥

तमेतं यथोक्तलक्षणमात्मानम्

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥१३.२३॥

य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेन "अयमहमस्मि" इति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया, सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते, देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात्किमु वक्तव्यं ? स्ववृत्तस्थो न जायते इत्यभिप्रायः ॥

ननु, यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः, तथापि प्राग्ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तानेकजन्मकृतानि तेषां च फलमदत्त्वा नाशो न युक्त इति । स्युस्त्रीणि जन्मानि कृतविप्रणाशो हि न युक्त इति, यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणाम् । न च कर्मणां विशेषोऽवगम्यते । तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन् । संहतानि वा सर्वाण्येकं जन्मारभेरन् । अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः, शास्त्रानर्थक्यं च स्यात् । इत्यतः इदमयुक्तमुक्तं न स भूयोऽभिजायते इति । न । क्षीयन्ते चास्य कर्माणि [ुण्डू २.२.८], ब्रह्म वेद ब्रह्मैव भवति [ुण्डू ३.२.९],
तस्य तावदेव चिरम् [Cहाऊ ६.१४.२], इषीकातूलवत्सर्वाणि कर्माणि प्रदूयन्ते [Cहाऊ ५.२४.३] इत्यादिश्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः ।

इहापि चोक्तो यथैधांसि [गीता ४.३७] इत्यादिना सर्वकर्मदाहः । वक्ष्यति चोपपत्तेश्च । अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरमारभन्ते । इहापि च साहंकाराभिसंधीनि कर्माणि फलारम्भकाणि, नेतराणीति तत्र तत्र भगवतोक्तम् ।

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः [म.भा. ३.२००.१०] इति च ।
अस्तु तावज्ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहः, ज्ञानसहभावित्वात् । न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानां कर्मणामतीतजन्मकृतानां च दाहो युक्तः । न । सर्वकर्माणीति विशेषणात् । ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेत्, न । संकोचे कारणानुपपत्तेः । यत्तूक्तं यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने, तथानारब्धफलानामपि कर्मणां क्षयो न युक्त इति, तदसत् । कथम् ? तेषां मुक्तेषुवत्प्रवृत्तफलत्वात् । यथा पूर्वं लक्ष्यवेधाय मुक्त इषुः धनुषो लक्ष्यवेधोत्तरकालम्
अपि आरब्धवेगक्षयात्पतनेनैव निवर्तते, एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽपि, आ संस्कारवेगक्षयात्पूर्ववत्वर्तत एव । यथा स एव इषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽपि उपसंह्रियते, तथानारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति । पतितेऽस्मिन् विद्वच्छरीरे न स भूयोऽभिजायते इति युक्तमेवोक्तमिति सिद्धम् ॥१३.२३॥

अत्रात्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥१३.२४॥

ध्यानेन । ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य, मनश्च प्रत्यक्चेतनयितरि, एकाग्रतया यच्चिन्तनं तद्ध्यानम् । तथा, ध्यायतीव बकः, ध्यायतीव पृथिवी, ध्यायन्तीव पर्वताः [Cहाऊ ७.६.१] इति उपमोपादानात् । तैलधारावत्संततोऽविच्छिन्नप्रत्ययो ध्यानम् । तेन ध्यानेन आत्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना स्वेनैव प्रत्यक्चेतनेन ध्यानसंस्कृतेनान्तःकरणेन केचिद्योगिनः । अन्ये सांख्येन योगेन । सांख्यं नाम इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष
सांख्यो योगः । तेन पश्यन्ति आत्मानमात्मनेत्यनुवर्तते । कर्मयोगेन । कर्मैव योगः । ईश्वरार्पणबुद्ध्यानुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग उच्यते गुणतः । तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥१३.२४॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥१३.२५॥

अन्ये त्वेषु विकल्पेषु अन्यतमेनाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्यः आचार्येभ्यः श्रुत्वा "इदमेव चिन्तयत" इत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति । तेऽपि चातितरन्त्येव अतिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतत् । श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः । केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः । किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः ॥१३.२५॥

क्षेत्रज्ञं चापि मां विद्धि [गीता १३.३] इति क्षेत्रज्ञेश्वरकत्वविषयं ज्ञानं मोक्षसाधनं, यज्ज्ञात्वामृतमश्नुते [गीता १३.१३] इत्युक्तम् । तत्कस्माथेतोः ? इति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥१३.२६॥

यावत्यत्किंचित्संजायते समुत्पद्यते सत्त्वं वस्तु । किमविशेषेण ? नेत्याह स्थावरजङ्गमं स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायते इत्येवं विद्धि जानीहि भरतर्षभ ।

कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः ? न तावत्रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवति, आकाशवन्निरवयवत्वात् । नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमात् । इत्युच्यते क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः,
रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् । सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राक्दर्शितरूपात्क्षेत्रान्मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यते [गीता १३.१३] इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्मस्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुवद्गन्धर्वनगरादिवदसदेव सदिवावभासते । इत्
एवं निश्चितविज्ञानो यः, तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम् । तस्य जन्महेतोरपगमाद्य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह [गीता १३.२५] इत्यनेन विद्वान् भूयो नाभिजायते इति यदुक्तम्, तदुपपन्नमुक्तम् ॥१३.२६॥

न स भूयोऽभिजायते [गीता १३.२४] इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः । जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतस्तस्याः अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।

विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥१३.२७॥

समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तम् । क्व ? सर्वेषु समस्तेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु । कम् ? परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परमेश्वरः, तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्स्विति । तं च परमेश्वरमविनश्यन्तमिति, भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथम् ? सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलम् । जन्मोत्तरकालभाविनोऽन्ये सर्वे भावविकारा विनाशान्ताः
। विनाशात्परो न कश्चिदस्ति भावविकारः, भावाभावात् । सति हि धर्मिणि धर्मा भवन्ति । अतोऽन्त्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः । तस्मात्सर्वभूतैः वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धम्, निर्विशेषत्वमेकत्वं च । य एवं यथोक्तं परमेश्वरं पश्यति, स पश्यति ।

ननु सर्वोऽपि लोकः पश्यति, किं विशेषणेनेति । सत्यं पश्यति । किं तु विपरीतं पश्यति । अतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति, तमपेक्ष्य एकचन्द्रदर्शी विशिष्यते स एव पश्यतीति । तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति, स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति । विपरीतदर्शित्वातनेकचन्द्रदर्शिवदित्यर्थः ॥ १३.२७॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्या इति श्लोक आरभ्यते

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥१३.२८॥

समं पश्यन्नुपलभमानो हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरमतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः । समं पश्यन् किम् ? न हिनस्ति हिंसां न करोति आत्मना स्वेनैव स्वमात्मानम् । तत्तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम् ॥

ननु नैव कश्चित्प्राणी स्वयं स्वमात्मानं हिनस्ति । कथमुच्यतेऽप्राप्तं न हिनस्तीति ? यथा न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यः [टैत्त्ष्५.२.७.१] इत्यादि । नैष दोषः, अज्ञानामात्मतिरस्करणोपपत्तेः । सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य, तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते नवं, तं चैवं हत्वान्यम् । एवं तमपि हत्वान्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञः । यस्तु परमार्थात्मासावपि सर्वदाविद्यया हत इव विद्यमानफलाभावादिति सर्वे आत्महन एवाविद्वांसः
। यस्त्वितरो यथोक्तात्मदर्शी, स उभयथापि आत्मनात्मानं न हिनस्ति न हन्ति । ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः ॥ १३.२८॥

सर्वभूतस्थमीश्वरं समं पश्यन्न हिनस्त्यात्मनात्मानम् [गीता १३.२८] इत्युक्तम् । तदनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मसु, इत्येतदाशङ्क्याह

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥१३.२९॥

प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका । मायां तु प्रकृतिं विद्याद्[श्वेतू ४.१०] इति मन्त्रवर्णात् । तया प्रकृत्यैव च नान्येन महदादिकार्यकारणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते, तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं स पश्यति, स परमार्थदर्शीत्यभिप्रायः । निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥ १३.२९॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥१३.३०॥

यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशमनु आत्मानं प्रत्यक्षत्वेन पश्यत्यात्मैवेदं सर्वम् [Cहाऊ ७.२५.२] इति । तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकासमात्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नम् [Cहाऊ ७.२६.१] इत्येवमादिप्रकारैर्विस्तारं यदा पश्यति ब्रह्म संपद्यते भवति तदा तस्मिन् काल इत्यर्थः ॥१३.३०॥

एकस्यात्मानः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्ते, इदमुच्यते

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥१३.३१॥

अनादित्वात् । अनादेर्भावोऽनादित्वम्, आदिः कारणम्, तद्यस्य नास्ति तदनादि । यद्ध्यादिमत्तत्स्वेनात्मना व्येति । अयं त्वनादित्वान्निरवयव इति कृत्वा न व्येति । तथा निर्गुणत्वात् । सगुणो हि गुणव्ययात्व्येति । अयं तु निर्गुणत्वाच्च न व्येति । इति परमात्मायमव्ययः । नास्य व्ययो विद्यत इत्यव्ययः । यत एवमतः शरीरस्थोऽपि, शरीरेषु आत्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते । तथापि न करोति । तदकरणादेव तत्फलेन न लिप्यते । यो हि कर्ता, स कर्मफलेन लिप्यते । अयं त्वकर्ता, अतो न फलेन लिप्यते इत्यर्थः ।

कः पुनर्देहेषु करोति लिप्यते च ? यदि तावतन्यः परमात्मनो देही करोति लिप्यते च, ततः इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञं चापि मां विद्धि [गीता १३.२] इत्यादि । अथ नास्ति ईश्वरादन्यो देही । कः करोति लिप्यते च ? इति वाच्यम् । परो वा नास्तीति सर्वथा दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च । तत्रायं परिहारो भगवता स्वेनैव उक्तः स्वभावस्तु प्रवर्तते [गीता ५.१४] इति । अविद्यामात्रस्वभावो हि करोति लिप्यते इति व्यवहारो भवति, न तु परमार्थत एकस्मिन् परमात्मनि तदस्ति । अत एवैतस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥१३.३१॥

किमिव न करोति न लिप्यते इत्यत्र दृष्टान्तमाह

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥१३.३२॥

यथा सर्वगतं व्याप्यपि सत्सौक्ष्म्यात्सूक्ष्मभावादाकाशं खं नोपलिप्यते न संबध्यते, सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥१३.३२॥

किं च

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥१३.३४॥

यथा प्रकाशयत्यवभासयति एकः कृत्स्नं लोकमिमं रविः सविता आदित्यः, तथा तद्वत्महाभूतादिधृत्यन्तं क्षेत्रमेकः सन् प्रकाशयति । कः ? क्षेत्री परमात्मा इत्यर्थः । रविदृष्टन्तोऽत्र आत्मन उभयार्थोऽपि भवति । रविवत्सर्वक्षेत्रेष्वेक एवात्मा, अलेपकश्चेति ॥१३.३४॥

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥१३.३५॥

क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितमात्मप्रत्ययिकं ज्ञानं चक्षुः, तेन ज्ञानचक्षुषा, भूतप्रकृतिमोक्षं च, भूतानां प्रकृतिरविद्यालक्षणाव्यक्ताख्या, तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति, यान्ति गच्छन्ति ते परं परमात्मतत्त्वं ब्रह्म, न पुनर्देहमाददते इत्यर्थः ॥१३.३५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥

# चतुर्दशोऽध्यायः

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तम् । तत्कथमिति, तत्प्रदर्शनार्थं परं भूय इत्यादिरध्याय आरभ्यते । अथवा, ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोः जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थम् । प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तम् । कस्मिन् गुणे कथं सङ्गः ? के वा गुणाः ? कथं वा ते बध्नन्तीति ? गुणेभ्यश्च मोक्षणं कथं स्यात्? मुक्तस्य च लक्षणं वक्तव्यम्, इत्येवमर्थं च भगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१४.१॥

परं ज्ञानमिति व्यवहितेन संबन्धः । भूयः पुनः पूर्वेषु सर्वेष्वध्यायेषु असकृदुक्तमपि प्रवक्ष्यामि । तच्च परं परवस्तुविषयत्वात् । किं तत्? ज्ञानं सर्वेषां ज्ञानानामुत्तमम्, उत्तमफलत्वात् । ज्ञानानामिति नामानित्वादीनाम् । किं तर्हि ? यज्ञादिज्ञेयवस्तुविषयाणामिति । तानि न मोक्षाय, इदं तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्मात्
देहबन्धनातूर्ध्वं गताः प्राप्ताः ॥१४.१॥

अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥१४.२॥

इदं ज्ञानं यथोक्तमुपाश्रित्य, ज्ञानसाधनमनुष्ठाय इत्येतत्, मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थः । न तु समानधर्मता साधर्म्यम्, क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद्गीताशास्त्रे । फलवादश्चायं स्तुत्यर्थमुच्यते । सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते । नोत्पद्यन्ते । प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते, न च्यवन्तीत्यर्थः ॥१४.२॥

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥१४.३॥

मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां कारणम् । सर्वकार्येभ्यो महत्त्वात्कारणत्वाद्बृंहणाच्च [भरणाच्च] स्वविकाराणां महद्ब्रह्म इति योनिरेव विशिष्यते । तस्मिन्महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहम्, अविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्माद्गर्भाधानाद्भवति । हे भारत ॥१४.३॥

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥१४.४॥

देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय, मूर्तयो देहसंस्थानलक्षणा मूर्च्छिताङ्गावयवा मूर्तयः संभवन्ति याः, तासां मूर्तीनां ब्रह्म महत्सर्वावस्थं योनिः कारणमहमीश्वरो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥१४.४॥

के गुणाः ? कथं बध्नन्ति ? इत्युच्यते

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥१४.५॥

सत्त्वं रजस्तम इत्येवंनामानो गुणा इति पारिभाषिकः शब्दः । न रूपादिवद्द्रव्याश्रिता गुणाः । न च गुणगुणिनोरन्यत्वमत्र विवक्षितम् । तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात्क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते । ते च प्रकृतिसंभवा भगवन्मायासंभवा निबध्नन्तीव । हे महाबाहो । महान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य सः महाबाहुः हे महाबाहो । देहे शरीरे देहिनं देहवन्तमव्ययम्, अव्ययत्वं चोक्तमनादित्वाद्[गीता १३.३२] इत्यादि श्लोकेन । ननु देही न लिप्यते [गीता १३.३२] इत्युक्तम् । तत्कथमिह निबध्नन्तीत्य्
अन्यथोच्यते ? परिहृतमस्माभिरिवशब्देन निबध्नन्तीवेति ॥१४.५॥

तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥१४.६॥

निर्मलत्वात्स्फटिकमणिरिव प्रकाशकमनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति । कथम् ? सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषैव सुखे सञ्जनमिति । सैषाविद्या । न हि विषयधर्मो विषयिणो भवति । इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्मः इत्युक्तं भगवता । अतोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयास्वात्मभूते सुखे संजयतीव, आसक्तमिव करोति, असङ्गं सक्तमिव करोति, असुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च, ज्ञानमिति सुखसाहचर्यात्क्षेत्रस्यैव
विषयस्यान्तःकरणस्य धर्मः, नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेः, बन्धानुपपत्तेश्च । सुख इव ज्ञानादौ सङ्गो मन्तव्यः । हे अनघ अव्यसन ॥१४.६॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥१४.७॥

रजः रागात्मकं रजनाद्रागो गैरिकादिव द्रागात्मकं विद्धि जानीहि । तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः । आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः । तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति तद्रजो निबध्नाति कौन्तेय कर्मसङ्गेन, दृष्टादृष्टार्थेषु

कर्मसु सञ्जनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥१४.७॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥१४.८॥

तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि । मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवताम् । प्रमादालस्यनिद्राभिः प्रमादश्चालस्यं च निद्रा च प्रमादालस्यनिद्रास्ताभिः प्रमादालस्यनिद्राभिस्तत्तमो निबध्नाति भारत ॥१४.८॥

पुनर्गुणानां व्यापारः संक्षेपत उच्यते

सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥१४.९॥

सत्त्वं सुखे संजयति संश्लेषयति, रजः कर्मणि हे भारत संजयतीत्यनुवर्तते । ज्ञानं सत्त्वकृतं विवेकमावृत्य आच्छाद्य तु तमः स्वेन आवरणात्मना प्रमादे संजयत्युत । प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥१४.९॥

उक्तं कार्यं कदा कुर्वन्ति गुणाः ? इत्युच्यते

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१४.१०॥

रजस्तमश्च उभावप्यभिभूय सत्त्वं भवति उद्भवति वर्धते यदा, तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते । हे भारत ! तथा रजोगुणः सत्त्वं तमश्चैव उभावप्यभिभूय वर्धते यदा, तदा कर्म तृष्णादि स्वकार्यमारभते । तमआख्यो गुणः सत्त्वं रजश्च उभावप्यभिभूय तथैव वर्धते यदा, तदा ज्ञानावरणादि स्वकार्यमारभते ॥१४.१०॥

यदा यो गुण उद्भूतो भवति, तदा तस्य किं लिङ्गम् ? इत्युच्यते

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥१४.११॥

सर्वद्वारेषु, आत्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि, तेषु सर्वद्वारेषु अन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिनुपजायते । तदेव ज्ञानम् । यदैवं प्रकाशो ज्ञानाख्य उपजायते, तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥१४.११॥

रजस उद्भूतस्येदं चिह्नम्

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१४.१२॥

लोभः परद्रव्यादित्सा । प्रवृत्तिः प्रवर्तनम् । सामान्यचेष्टा आरम्भः । कस्य ? कर्मणाम् । अशमोऽनुपशमः हर्षरागादिप्रवृत्तिः । स्पृहा

सर्वसामान्यवस्तुविषया तृष्णा । रजसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते । हे भरतर्षभ ॥१४.१२॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१४.१३॥

अप्रकाशोऽविवेकः । अत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावस्तत्कार्यं प्रमादो मोह एव च । अविवेको मूढता इत्यर्थः । तमसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ! ॥१४.१३॥

मरणद्वारेणापि यत्फलं प्राप्यते, तदपि सङ्गरागहेतुकं सर्वं गौणमेवेति दर्शयनाह

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥१४.१४॥

यदा सत्त्वे प्रवृद्ध उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा, तदोत्तमविदां महदादितत्त्वविदामित्येतत् । लोकानमलान्मलरहितान् प्रतिपद्यते प्राप्नोतीत्येतत् ॥१४.१४॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१४.१५॥
रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥१४.१५॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१४.१६॥

कर्मणः सुकृतस्य सात्त्विकस्य इत्यर्थः, आहुः शिष्टः सात्त्विकमेव निर्मलं फलमिति । रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः, कर्माधिकारात्फलमपि दुःखमेव, कारणानुरूप्यात्, राजसमेव । तथा अज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥१४.१६॥

किं च, गुणेभ्यो भवति

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१४.१७॥

सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानम्, रजसो लोभ एव च, प्रमादमोहौ च उभौ तमसो भवतः, अज्ञानमेव च भवति ॥१४.१७॥

किं च

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१४.१८॥

ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमः, तस्य वृत्तं निद्रालस्यादि, तस्मिन् स्थिताः जघन्यगुणवृत्तस्थाः मूढाः अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥१४.१८॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तम्, तदिह सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इत्यारभ्य गुणस्वरूपम्, गुणवृत्तम्, स्ववृत्तेन च गुणानां बन्धकत्वम्, गुणवृत्तनिबद्धस्य च पुरूषस्य या गतिः, इत्येतत्सर्वं मिथ्याज्ञानमूलं बन्धकारणं विस्तरेणोक्त्वा, अधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्यत आह भगवान्

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१४.१९॥

नान्यं कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान् सन्नानुपश्यति, गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तार इत्येवं पश्यति, गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति, मद्भावं मम भावं स द्रष्टाधिगच्छति ॥१४.१९॥

कथमधिगच्छति ? इत्युच्यते

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥१४.२०॥

गुणानेतान् यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतान् त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैर्जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि तैर्जीवन्नेव विमुक्तः सन् विद्वानमृतमश्नुते । एवं मद्भावमधिगच्छतीत्यर्थः ॥१४.२०॥

जीवन्नेव गुणानतीत्यामृतमश्नुते इति प्रश्नबीजं प्रतिलभ्यार्जुन उवाच

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥१४.२१॥

कैर्लिङ्गैश्चिह्नैस्त्रीनेतान् व्याख्यातान् गुणानतीतोऽतिक्रान्तो भवति प्रभो, किमाचारः ? कोऽस्य आचार इति किमाचारः । कथं केन च प्रकारेण एतान् त्रीन् गुणानतिवर्ततेऽतीत्य वर्तते ॥१४.२१॥

गुणातीतस्य लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिन् श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवानुवाच । यत्तावत्कैर्लिङ्गैर्युक्तो गुणातीतो भवतीति तत्शृणु

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥१४.२२॥

प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेन उद्भूतानि मम तामसः प्रत्ययो जातः, तेनाहं मूढः । तथा राजसी प्रवृत्तिर्मम उत्पन्ना दुःखात्मिका, तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात् । कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानात्भ्रंशः । तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखे च सजयन् बध्नातीति तानि द्वेष्ट्यसम्यग्दर्शित्वेन । ततेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि
। यथा च सात्त्विकादिपुरुषः सत्त्वादिकार्याणि आत्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति, न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । एतत्न परप्रत्यक्षं लिङ्गम् । किं तर्हि ? स्वात्मप्रत्यक्षत्वातात्मार्थमेव एतत्लक्षणम् । न हि स्वात्मविषयं द्वेषमाकाङ्क्षां वा परः पश्यति ॥ १४.२२॥

अथ इदानीं गुणातीतः किमाचारः ? इति प्रश्नस्य प्रतिवचनमाह

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥१४.२३॥

उदासीनवद्यथा उदासीनो न कस्यचित्पक्षं भजते, तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत्स्फुटीकरोति गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन् वर्तन्ते इति योऽवतिष्ठति । छन्दोभङ्गभयात्परस्मैपदप्रयोगः । योऽनुतिष्ठतीति वा पाठान्तरम् । नेङ्गते न चलति, स्वरूपावस्थ एव भवतीत्यर्थः ॥१४.२३॥

किं च

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥१४.२४॥

समदुःखसुखः समे दुःखसुखे यस्य सः समदुःखसुखः, स्वस्थः स्वे आत्मनि स्थितः प्रसन्नः समलोष्टाश्मकाञ्चनः लोष्टं चाश्मा च काञ्चनं च लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः, तुल्यप्रियाप्रियः प्रियं चाप्रियं च प्रियाप्रिये तुल्ये समे यस्य सोऽयं तुल्यप्रियाप्रियः, धीरो धीमान्, तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुति च निन्दात्मसंस्तुती, तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥१४.२४॥

किं च

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥१४.२५॥

मानापमानयोस्तुल्यः समो निर्विकारः । तुल्यो मित्रारिपक्षयोः । यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण, तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्यो मित्रारिपक्षयोरित्याह । सर्वारम्भपरित्यागी । दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः । सर्वानारम्भान् परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी । देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतः स उच्यते ॥१४.२५॥

उदासीनवदित्यादि गुणातीतः स उच्यते इत्येतदन्तमुक्तं यावत्यत्नसाध्यं तावत्संन्यासिनोऽनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः । स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति । अधुना कथं च त्रीन्गुणानतिवर्तते ? इत्यस्य प्रश्नस्य प्रतिवचनमाह

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥१४.२६॥

मां च ईश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा अव्यभिचारेण न कदाचिद्यो व्यभिचरति भक्तियोगेन भजनं भक्तिः सैव योगस्तेन भक्तियोगेन सेवते, स गुणान् समतीत्य एतान् यथोक्तान् । ब्रह्मभूयाय । भवनं भूयः, ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥१४.२६॥

कुत एतद्? इत्युच्यते

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥१४.२७॥
ब्रह्मणः परमात्मनो हि यस्मात्प्रतिष्ठाहं प्रतितिष्ठत्यस्मिनिति प्रतिष्ठाहं प्रत्यगात्मा । कीदृशस्य ब्रह्मणः ? अमृतस्य अविनाशिनः । अव्ययस्य अविकारिणः । शाश्वतस्य च नित्यस्य धर्मस्य धर्मज्ञानस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्य आनन्दरूपस्य ऐकान्तिकस्य अव्यभिचारिणोऽमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा ।

सम्यग्ज्ञानेन परमात्मतया निश्चीयते । तदेतद्ब्रह्मभूयाय कल्पत इत्युक्तम् । यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते, सा शक्तिर्ब्रह्मैवाहम् । शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः । अथवा, ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म । तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः । किंविशिष्टस्य ? अमृतस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य । किं च, शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्य ऐकान्तिकस्य एकान्तनियतस्य च, प्रतिष्ठाहमिति वर्तते ॥१४.२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
चतुर्दशोऽध्यायः
॥१४॥

## पञ्चदशोऽध्यायः

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलम्, अतो भक्तियोगेन मां ये सेवन्ते ते मम प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति । किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यक्विजानन्त इत्यतो भगवानर्जुनेनापृष्टोऽप्यात्मनस्तत्त्वं विवक्षुरुवाच ऊर्ध्वमूलमित्यादिना । तत्र तावद्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसारात्भगवत्तत्त्वज्ञानेऽधिकारः, नान्यस्येति । श्रीभगवानुवाच

श्रीभगवानुवाच
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१५.१॥

ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वात्महत्त्वाच्चोर्ध्वम् । उच्यते ब्रह्माव्यक्तं माया शक्तिमत्, तन्मूलमस्येति सोऽयं संसारवृक्षः ऊर्ध्वमूलः । श्रुतेश्च ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः [Kअठू २.३.१] इति । पुराणे च

अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः ।
बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥
महाभूतविशाखश्च विषयैः पत्रवांस्तथा ।
धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतद्ब्रह्मवनं चास्य ब्रह्माचरति साक्षिवत् ॥
एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ।

ततश्चात्मगतिं प्राप्य तस्मान्नावर्तते पुनः ॥ [म.भा. १४.३५.२०२२] इत्यादि ।

तमूर्ध्वमूलं संसारं मायामयं वृक्षमाहुः । अधःशाखं महदहंकारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखः, तमधःशाखम् । न श्वोऽपि स्थातेत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्त्यव्ययं संसारमायाया अनादिकालप्रवृत्तत्वात्सोऽयं संसारवृक्षोऽव्ययः, अनाद्यन्तदेहादिसंतानाश्रयो हि सुप्रसिद्धः, तमव्ययम् । तस्यैव संसारवृक्षस्य इदमन्यत्विशेषणम् छन्दांसि यस्य पर्णानि, छन्दांसि च्छादनादृग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि । यथा वृक्षस्य परिरक्षणार्थानि पर्णानि, तथा वेदाः संसारवृक्षपरिरक्षणार्था धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात् । यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदवित्, वेदार्थविदित्यर्थः । न हि समूलात्संसारवृक्षादस्माज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्तीत्यतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति ॥१५.१॥

तस्यैतस्य संसारवृक्षस्यापरावयवकल्पनोच्यते

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥१५.२॥

अधो मनुष्यादिभ्यो यावत्स्थावरम्, अत ऊर्ध्वं च यावद्ब्रह्मणो विश्वसृजो धाम इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि, तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः । गुणप्रवृद्धाः गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैः । विषयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरीभवन्तीव, तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परममूलमुपादानकारणं पूर्वमुक्तम् । अथेदानीं कर्मफलजनितरागद्वेषादिवासना
मूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देवाद्यपेक्षया मूलान्यनुसन्ततान्यनुप्रविष्टनि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावि, येषामुद्भूतिमनु उद्भवति, तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतः । अत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥१५.२॥

यस्त्वयं वर्णितः संसारवृक्षः

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलम्
असङ्गशस्त्रेण दृढेन छित्त्वा ॥१५.३॥

न रूपमस्येह यथोपवर्णितं तथा नैव उपलभ्यते, स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वात् । दृष्टनष्टस्वरूपो हि स इत्यत एव नान्तो न पर्यन्तो निष्ठा परिसमाप्तिर्वा विद्यते । तथा न चादिः । "इत आरभ्यायं प्रवृत्तः" इति न केनचिद्गम्यते । न च संप्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यते । अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलानि यस्य तमेनं सुविरूढमूलम् । असङ्गशस्त्रेण असङ्गः पुत्रवित्तलोकैषणाभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनः पुनर्विवेकाभ्यासाश्मनिशितेन च्छित्वा
संसारवृक्षं सबीजमुद्धृत्य ॥१५.३॥

ततः पदं तत्परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥१५.४॥

ततः पश्चात्यत्पदं वैष्णवं तत्परिमार्गितव्यम्, परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः । यस्मिन् पदे गताः प्रविष्टा न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय । कथं परिमार्गितव्यमित्याह तमेव च यः पदशब्देनोक्त आद्यमादौ भवमाद्यं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यं तच्छरणतया इत्यर्थः । कोऽसौ पुरुषः ? इत्युच्यते यतो यस्मात्पुरुषात्संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृता ऐन्द्रजालिकादिव माया । पुराणी चिरंतनी ॥ १५.४॥

कथंभूतास्तत्पदं गच्छन्तीत्युच्यते

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्
गच्छन्त्यमूढाः पदमव्ययं तत् ॥१५.५॥

निर्मानमोहा मानश्च मोहश्च मानमोहौ, तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिताः । जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः, जितः सङ्गदोषो यैस्ते जितसङ्गदोषाः । अध्यात्मनित्याः परमात्मस्वरूपालोचननित्यास्तत्पराः । विनिवृत्तकामा विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामाः । यतयः संन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥१५.५॥

तदेव पदं पुनर्विशेष्यते

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥१५.६॥

तत्धामेति व्यवहितेन धाम्ना संबध्यते । तद्धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति । तथा न शशाङ्कश्चन्द्रः, न पावको नाग्निरपि । यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते, यच्च सूर्यादिर्न भासयते, तद्धाम पदं परमं विष्णोर्मम पदम् ॥१५.६॥

ननु सर्वा हि गतिरागत्यन्ताः । संयोगाः विप्रयोगान्ताः [म.भा. ११.२.३] इति हि प्रसिद्धम् । कथमुच्यते तत्धाम गतानां नास्ति निवृत्तिः ? इति । सृणु तत्र कारणम्

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥१५.७॥

ममैव परमात्मनो नारायणस्य, अंशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतः कर्ता भोक्तेति प्रसिद्धः सनातनश्चिरन्तनः । यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते च तेनैवात्मना गच्छति, एवमेव । यथा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते । अत उपपन्नमुक्तं यद्गत्वा न निवर्तन्ते इति ।

ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोऽंशः इति ? सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागात् । नैष दोषः, अविद्याकृतोपाधिपरिच्छिन्न एकदेशोऽंश इव कल्पितो यतः । दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशत्वेन कल्पितः कथं संसरत्युत्क्रामति च ? इत्युच्यते मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षति आकर्षति ॥ १५.७॥

कस्मिन् काले ?

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥१५.८॥

यच्चापि यदा चापि उत्क्रामतीश्वरो देहादिसंघातस्वामी जीवः, तदा कर्षति [१५.८] इति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन संबध्यते । यदा च पूर्वस्मात्शरीरात्शरीरान्तरमवाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यक्याति गच्छति । किमिव ? इत्याह वायुः पवनो गन्धानिव आशयात्पुष्पादेः ॥१५.८॥

कानि पुनस्तानि

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥१५.९॥

श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सह, अधिष्ठाय देहस्थो विषयान् शब्दादीनुपसेवते ॥१५.९॥

एवं देहगतं देहात्

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१५.१०॥

उत्क्रामन्तं देहं पूर्वोपात्तं परित्यजन्तं स्थितं वापि देहे तिष्ठन्तं भुञ्जानां वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवंभूतमप्येनमत्यन्तदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा नानुपश्यन्ति । अहो कष्टं वर्तते इत्यनुक्रोशति च भगवान् । ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय
इत्यर्थः ॥१५.१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥१५.११॥

यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानं पश्यन्त्ययमहमस्मीत्युपलभन्त आत्मनि स्वस्यां बुद्धाववस्थितम् । यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानस्तपसा इन्द्रियजयेन च, दुश्चरितादनुपरताः, अशान्तदर्पाः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥१५.११॥

यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिः नावभासयते, यत्प्राप्ता च मुमुक्षवः पुनः संसाराभिमुखाः न निवर्तन्ते, यस्य च पदस्य उपाधिभेदमनुविधीयमानाः जीवाः घटाकाशादयः इव आकाशस्य अंशाः, तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैः विभूतिसंक्षेपमाह भगवान्

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१५.१२॥

यतादित्यगतमादित्याश्रयम् । किं तत्? तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तम् । यच्चन्द्रमसि शशभृति तेजोऽवभासकं वर्तते, यच्चाग्नौ हुतवहे, तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा, आदित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि, यच्चाग्नौ वर्तते तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः ।

ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिः । तत्र कथमिदं विशेषणम् यदादित्यगतमित्यादि । नैष दोषः, सत्त्वाधिक्याद्विस्तरत्वोपपत्तेः । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरम् । अतस्तत्रैवाविस्तरं ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति, तद्वत् ॥१५.१२॥

किं च
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१५.१३॥

गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन । यद्बलं कामरागविवर्जितमैश्वरं रूपं जगद्विधारणाय पृथिव्यां प्रविष्टं येन पृथिवी गुर्वी नाधः पतति न विदीर्यते च । तथा च मन्त्रवर्णः येन द्यौरुग्रा पृथिवी च दृढा [टैत्त्ष्४.१.८] इति, स दाधार पृथिवीम् [ऋक्८.७.३.१] इत्यादिश्च । अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किं च, पृथिव्यां जाता ओषधीः सर्वाः व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादुमती च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मकः रसस्वभावः । सर्वरसानामाकरः सोमः
। स हि सर्वरसात्मकः सर्वाः ओषधीः स्वात्मरसाननुप्रवेशयन् पुष्णाति ॥१५.१३॥

किं च

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१५.१४॥

अहमेव वै वैश्वानर उदरस्थोऽग्निर्भूत्वा अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते [बृहदारण्यकोपनिषद् ५.९.१] इत्यादिश्रुतेः । वैश्वानरः सन् प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पङ्क्तिं करोम्यन्नमशनं चतुर्विधं चतुष्प्रकारं भोज्यं भक्ष्यं चोष्यं लेह्यं च । भोक्ता वै वानरोऽग्निः । अग्नेर्भोज्यमन्नं सोमः । तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो
न भवति ॥१५.१४॥

किं च

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥१५.१५॥

सर्वस्य च प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ संनिविष्टः । अतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं चापगमनं च । येषां यथा पुण्यकर्मणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं चापायनमपगमनं च । वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यः । वेदान्तकृद्वेदान्तार्थसंप्रदायकृदित्यर्थः, वेदविद्वेदार्थविदेव चाहम् ॥१५.१५॥

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो यदादित्यगतं तेजः [गीता १५.१२] इत्यादिना । अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य तत्त्वस्वरूपनिर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते । तत्र सर्वमेवातीतानागतानन्तराध्यायार्थजातं त्रिधा राशीकृत्य आह

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१५.१६॥

द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे क्षरश्च क्षरतीति क्षरो विनाशी इत्येको राशिः । अपरः पुरुषोऽक्षरस्तद्विपरीतः, भगवतो मायाशक्तिः, क्षराख्यस्य पुरुषस्य उत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रय अक्षरः पुरुष उच्यते । कौ तौ पुरुषौ ? इत्याह स्वयमेव भगवान् क्षरः सर्वाणि भूतानि, समस्तं विकारजातमित्यर्थः । कूटस्थः कूटाः राशी राशिरिव स्थितः । अथवा, कूटा माया वचना जिह्मता कुटिलता इति पर्यायाः । अनेकमायावचनादिप्रकारेण स्थितः
कूटास्थः । संसारबीजानन्त्यात्, न क्षरतीत्यक्षर उच्यते ॥१५.१६॥

आभ्यां क्षराक्षराभ्यामन्यो विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टः नित्यशुद्धबुद्धमुक्तस्वभावः

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१५.१७॥

उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षण आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्याकृतात्मभ्यः, आत्मश्च सर्वभूतानां प्रत्यक्चेतनः, इत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु । स एव विशिष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्या आविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति । अव्ययो नास्य व्ययो विद्यत इत्यव्ययः । कः ? ईश्वरः सर्वज्ञो नारायणाख्य ईशनशीलः ॥१५.१७॥

यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतत्नाम प्रसिद्धम् । तस्य नामनिर्वचनप्रसिद्धयार्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१५.१८॥

यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारमायारूपवृक्षबीजभूतादपि चोत्तम उत्कृष्टतमः ऊर्ध्वतमो वा । अतस्ताभ्यां क्षराक्षराभ्यामुत्तमत्वादस्मि लोके वेदे च प्रथितः प्रख्यातः । पुरुषोत्तम इत्येवं मां भक्तजना विदुः । कवयः काव्यादिषु चेदं नाम निबध्नन्ति । पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥१५.१८॥

अथेदानीं यथानिरुक्तमात्मानं यो वेद, तस्येदं फलमुच्यते

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥१५.१९॥

यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेण असंमूढः संमोहवर्जितः सन् जानात्ययमहमस्मीति पुरुषोत्तमं, स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मतया हे भारत ॥१५.१९॥

अस्मिनध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वा, अथ इदानीं तत्स्तौति

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥१५.२०॥

इति एतद्गुह्यतमं गोप्यतमम्, अत्यन्तरहस्यमित्येतत् । किं तत्? शास्त्रम् । यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते, तथाप्ययमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिनध्याये समासेन उक्तः । न केवलं गीताशास्त्रार्थ एव, किंतु सर्वश्च वेदार्थ इह परिसमाप्तः । यस्तं वेद स वेदवित्[गीता १५.१] वेदैश्च सर्वैरहमेव वेद्यः [गीता १५.१५] इति चोक्तम् । इदमुक्तं कथितं मया हेऽनघ अपाप ! एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्यात्भवेत्नान्यथा । कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन स कृतकृत्यः । विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते [गीता ४.३३] इति चोक्तम् ।

एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥ [ंनु १२.९३]

इति च मानवं वचनम् । यतः एतत्परमार्थतत्त्वं मत्तः श्रुतवानसि, अतः कृतार्थस्त्वं भारतेति ॥१५.२०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
पञ्चदशोऽध्यायः ॥

# षोडशोऽध्यायः

दैवी आसुरी राक्षसी चेति प्राणिणां प्रकृतयो नवमेऽध्याये सूचिताः । तासां विस्तरेण प्रदर्शनाय अभयं सत्त्वसंशुद्धिरित्यादिरध्यायः आरभ्यते । तत्र संसारमोक्षाय दैवी प्रकृतिः, निबन्धायासुरी राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियते । इतरयोः परिवर्जनाय च श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१६.१॥

अभयमभीरुता । सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संशुद्धिः । संव्यवहारेषु परवञ्चनामायानृतादिपरिवर्जनं शुद्धसत्त्वभावेन व्यवहार इत्यर्थः । ज्ञानयोगव्यवस्थितिर्ज्ञानं शास्त्रत आचार्यतश्च आत्मादिपदार्थानामवगमः । अवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगः । तयोर्ज्ञानयोगयोर्व्यावस्थितिः व्यवस्थानं तन्निष्ठता । एषा प्रधाना दैवी सात्त्विकी सोच्यते । दानं यथाशक्ति संविभागोऽन्नादीनाम् । दमश्च बाह्यकरणानामुपशमः । अन्तःकरणस्योपशमं शान्तिं
वक्ष्यति । यज्ञश्च श्रौतोऽग्निहोत्रादिः । स्मार्तश्च देवयज्ञादिः । स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थम् । तपो वक्ष्यमाणं शारीरादि । आर्जवमृजुत्वं सर्वदा ॥१६.१॥

किं च

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥१६.२॥

अहिंसाहिंसनं प्राणिनां पीडावर्जनम् । सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम् । अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्य उपशमनम् । त्यागः संन्यासः, पूर्वं दानस्योक्तत्वात् । शान्तिरन्तःकरणस्योपशमः । अपैशुनमपिशुनता । परस्मै पररन्ध्रप्रकटीकरणं पैशुनम्, तदभावोऽपैशुनम् । दया कृपा भूतेषु दुःखितेषु । अलोलुप्त्वमिन्द्रियाणां विषयसंनिधावविक्रिया । मार्दवं मृदुताक्रौर्यम् । ह्रीर्लज्जा ।

अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥१६.२॥

किं च

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥१६.३॥

तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः । क्षमा आक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिः । उत्पन्नायां विक्रियायां प्रअशमनमक्रोध इत्यवोचाम । इत्थं क्षमाया अक्रोधस्य च विशेषः । धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषः । येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति । शौचं द्विविधं मृज्जलकृतं बाह्यमाभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः । एवं द्विविधं शौचम् । अद्रोहः परजिघांसाभावो
ऽहिंसनम् । नातिमानिता अत्यर्थं मानोऽतिमानः, स यस्य विद्यते सोऽतिमानी । तद्भावोऽतिमानिता । तदभावो नातिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीनि एतदन्तानि संपदमभिजातस्य । किंविशिष्टं संपदम् ? दैवीं देवानां या संपत्तामभिलक्ष्य जातस्य देवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थः । हे भारत ! ॥१६.३॥

अथेदानीमासुरी संपदुच्यते

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥१६.४॥

दम्भो धर्मध्वजित्वम् । दर्पो विद्याधनस्वजनादिनिमित्त उत्सेकः । अतिमानः पूर्वोक्तः । क्रोधश्च । पारुष्यमेव च परुषवचनम् । यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्यादि । अज्ञानं चाविवेकज्ञानं कर्तव्याकर्तव्यादिविषयमिथ्याप्रत्ययः । अभिजातस्य पार्थ । किमभिजातस्येत्याह संपदमासुरीमसुराणां संपतासुरी तामभिजातस्य इत्यर्थः ॥१६.४॥

अनयोः संपदोः कार्यमुच्यते

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥१६.५॥

दैवी संपत्या सा विमोक्षाय संसारबन्धनात् । निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी संपत्मता अभिप्रेता । तथा राक्षसी च । तत्रैवमुक्ते सत्यर्जुनस्यान्तर्गतं भावं किमहमासुरसंपद्युक्तः ? किं वा दैवसंपद्युक्तः ? इत्येवमालोचनारूपमालक्ष्य आह भगवान् मा शुचः शोकं मा कार्षीः । संपदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि । भाविकल्याणस्त्वमसीत्यर्थः । हे पाण्डाव ॥१६.५॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥१६.६॥

द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येतेति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंपद्द्वययुक्तानीति द्वौ भूतसर्गावित्युच्यते । द्वया ह वै प्राजापत्या देवाश्चासुरा च [बृहदारण्यकोपनिषद् १.३.१] इति श्रुतेः । लोकेऽस्मिन्, संसार इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गौ ? इत्युच्यते प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितः, न तु आसुरो विस्तरशः । अतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः

सृणु अवधारय ॥१६.६॥

आ अध्यायपरिसमाप्तेरासुरी संपत्प्राणिविशेषणत्वेन प्रदर्श्यते, प्रत्यक्षीकरणेन च शक्यते तस्याः परिवर्जनं कर्तुमिति

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥१६.७॥

प्रवृत्तिं च प्रवर्तनं यस्मिन् पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्ताम्, निवृत्तिं च एतद्विपरीतां यस्मातनर्थहेतोः निवर्तितव्यं सा निवृत्तिस्तां च, जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव ते न विदुः, न शौचं नापि चाचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥१६.७॥

किं च
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥१६.८॥

असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यम् । अप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठं चेति । ते आसुराः जनाः जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किं च, अपरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकम् । कामहेतुकमेव कामहैतुकम् । किमन्यज्जगतः कारणम् ? न किंचितदृष्टं धर्माधर्मादि कारणान्तरं विद्यते । जगतः काम एव प्राणिनां
कारणमिति लोकायतिकदृष्टिरियम् ॥१६.८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥१६.९॥

एतां दृष्टिमवष्टभ्य आश्रित्य नष्टत्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयविषयाल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्ति उद्भवन्ति उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः । क्षयाय जगतः प्रभवन्तीति संबन्धः ॥ जगतोऽहिताः शत्रवः इत्यर्थः ॥१६.९॥

ते च

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१६.१०॥

काममिच्छाविशेषमाश्रित्य अवष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विताः दम्भमानमदान्विता मोहादविवेकतो गृहीत्वा उपादाय असद्ग्राहानशुभनिश्चयान् प्रवर्तन्ते लोके अशुचिव्रताः अशुचीनि व्रतानि येषां तेऽशुचिव्रताः ॥१६.१०॥

किं च
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥१६.११॥

चिन्तामपरिमेयां च, न परिमातुं शक्यते यस्याश्चिन्ताया इयत्ता सापरिमेया, तामपरिमेयाम्, प्रलयान्तां मरणान्तामुपाश्रिताः, सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमाः, काम्यन्ते इति कामा विषयाः शब्दादयस्तदुपभोगपरमा अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं निश्चितात्मानः । एतावतिति निश्चिताः ॥१६.११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१६.१२॥

आशापाशशतैराशैव पाशास्तच्छतैर्बद्धाः नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परमयनमाश्रयो येषां ते कामक्रोधपरायणाः । ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थम् । अन्यायेन परस्वापहरणादिनेत्यर्थः । किम् ? अर्थसंचयानर्थप्रचयान् ॥१६.१२॥

ईदृशश्च तेषामभिप्रायः

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१६.१३॥

इदं द्रव्यमद्य इदानीं मया लब्धम् । इदं चान्यत्प्राप्स्ये मनोरथं मनस्तुष्टिकरम् । इदं चास्तीदमपि मे भविष्यति आगामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामीति ॥१६.१३॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१६.१४॥

असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः । हनिष्ये चापरानन्यान् वराकानपि । किमेते करिष्यन्ति तपस्विनः । सर्वथापि नास्ति मत्तुल्यः । कथम् ? ईश्वरोऽहम्, अहं भोगी । सर्वप्रकारेणश्च सिद्धोऽहं संपन्नः पुत्रैः नप्तृभिः, न केवलं मानुषः, बलवान् सुखी चाहमेव । अन्ये तु भूमिभारायावितीर्णाः ॥१६.१४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१६.१५॥

आढङ्ः धनेन, अभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसंपन्नः तेनापि न मम तुल्योऽस्ति कश्चित् । कोऽन्योऽस्ति सदृशस्तुल्यः मया ? किं च, यक्ष्ये यागेनाप्यन्यानभिभविष्यामि, दास्यामि नटादिभ्यः, मोदिष्ये हर्षं चातिशयं प्राप्स्यामि, इति एवमज्ञानविमोहिताः अज्ञानेन विमोहिताः विविधमविवेकभावमापन्नाः ॥१६.१५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६.१६॥

अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैः विविधं भ्रान्ताः अनेकचित्तविभ्रान्ताः, मोहजालसमावृताः मोहोऽविवेकोऽज्ञानं तदेव जालमिव आवरणात्मकत्वात्, तेन समावृताः । प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तस्तेन उपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥

१६.१६॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१६.१७॥

आत्मसंभावित्ताः सर्वगुणविशिष्टतया आत्मनैव संभाविताः आत्मसंभाविताः, न साधुभिः । स्तब्धाः अप्रणतात्मानः । धनमानमदान्विताः धननिमित्तः मानः मदश्च, ताभ्यां धनमानमदाभ्यामन्विताः । यजन्ते नामयज्ञैः नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितयाविधिपूर्वकं विधिविहिताङ्गेतिकर्तव्यतारहितम् ॥१६.१७॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१६.१८॥

अहंकारमहंकरणमहंकारः । विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते, सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च, तम् । तथा बलं पराभिभवनिमित्तं कामरागान्वितम् । दर्पं दर्पो नाम यस्य उद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेषः । कामं स्त्र्यादिविषयम् । क्रोधमनिष्टविषयम् । एतानन्यांश्च महतो दोषान् संश्रिताः । किं च ते मामीश्वरम्
आत्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तः, मच्छासनातिवर्तित्वं प्रद्वेषः, तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेषु असहमानाः ॥१६.१८॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१६.१९॥

तानहं सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषतश्च मां क्रूरान् संसारेषु एवानेकनरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं संततमशुभानशुभकर्मकारिणः आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रण्सहादियोनिषु क्षिपामीत्यनेन संबन्धः ॥१६.१९॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥१६.२०॥

आसुरीं योनिमापन्नाः प्रतिपन्नाः मूढाः अविवेकिनो जन्मनि जन्मनि प्रतिजन्म तमोबहुलास्वेव योनिषु जायमानाः अधो गच्छन्तो मूढाः मामीश्वरमप्राप्यानासाद्य एव हे कौन्तेय, ततस्तस्मादपि यान्त्यधमां गतिं निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदपि आशङ्कास्ति, अतः मच्छिष्टसाधुमार्गमप्राप्य इत्यर्थः ॥१६.२०॥

सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिन् त्रिविधे सर्वः आसुरीसंपद्भेदोऽनन्तोऽप्यन्तर्भवति । यत्परिहारेण परिहृतश्च भवति, यत्मूलं सर्वस्यानर्थस्य, ततेतदुच्यते

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥१६.२१॥

त्रिविधं त्रिप्रकारं नरकस्य प्राप्ताविदं द्वारं नाशनमात्मनः, यत्द्वारं प्रविशन्नेव नश्यति आत्मा । कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतत्, अतरुच्यते द्वारं नाशनमात्मनः इति । किं तत्? कामः क्रोधस्तथा लोभः । तस्मातेतत्त्रयं त्यजेत् । यतः एतत्द्वारं

नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत् ॥१६.२१॥

त्यागस्तुतिरियम्

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥१६.२२॥

एतैः विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैः, एतैस्त्रिभिः विमुक्तो नर आचरत्यनुतिष्ठति । किम् ? आत्मनः श्रेयः । यत्प्रतिबद्धः पूर्वं नाचचार, तदपगमादाचरति । ततस्तदाचरणात्याति परां गतिं मोक्षमपीति ॥१६.२२॥

सर्वस्य एतस्य आसुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणम् । शास्त्रप्रमाणादुभयं शक्यं कर्तुम्, नान्यथा । अतः

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥१६.२३॥

यः शास्त्रविधिं शास्त्रं वेदस्तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन्, न स सिद्धिं पुरुषार्थयोग्यतामवाप्नोति, नाप्यस्मिन् लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥१६.२३॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥१६.२४॥

तस्मात्शास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायाम् । अतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रमेव विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणम्, तेन उक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ १६.२४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
षोडाशोऽध्यायः ॥

# सप्तदशोऽध्यायः

तस्माच्छास्त्रं प्रमाणं त [गीता १६.२४] इति भगवद्वाक्याल्लब्धप्रश्नबीजोऽर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१७.१॥

ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयान्विताः श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः । श्रुतिलक्षणं स्मृतिलक्षणं वा कंचित्शास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन् पूजयन्ति । ते इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येवं गृह्यन्ते । ये पुनः कंचित्शास्त्रविधिमुपलभमानैव तमुत्सृज्यायथाविधि देवादीन् पूजयन्ति । त इह ये शास्त्रविधिमुत्सृज्य यजन्त इति न परिगृह्यन्ते । कस्मात्? श्रद्धयान्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचित्
शास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्,

तस्मात्पूर्वोक्तैव ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः, किं सत्त्वं निष्ठावस्थानम्, आहो स्वित्रजः, अथवा तम इति । एतदुक्तं भवति या तेषां देवादिविषया पूजा, सा किं सात्त्विकी, आहो स्वित्राजसी, उत तामसीति ॥१७.१॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥१७.२॥

त्रिविधा त्रिप्रकारा भवति श्रद्धा । यस्यां निष्ठायां त्वं पृच्छसि । देहिनां शरीरिणां सा स्वभावजा । जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते, ततो जाता स्वभावजा । सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया । राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया । तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया । एवं त्रिविधां तामुच्यमानां श्रद्धां शृण्ववधारय ॥१७.२॥

सा इयं त्रिविधा भवति

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥१७.३॥

सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत । यद्येवं ततः किं स्यात्? इत्युच्यते श्रद्धामयोऽयं श्रद्धाप्रायः पुरुषः संसारी जीवः । कथम् ? यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥१७.३॥

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेया इत्याह

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥१७.४॥

यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसाः जनाः ॥ १७.४॥

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे । तत्र कश्चिदेव सहस्रेषु देवपूजादिपरः सत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति । कथम् ?

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥१७.५॥
अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये जनास्ते च दम्भाहंकारसंयुक्ताः । दम्भश्चाहंकारश्च दम्भाहंकारौ, ताभ्यां संयुक्ताः दम्भाहंकारसंयुक्ताः, कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलान्विताः ॥१७.५॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥१७.६॥

कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायमचेतसोऽविवेकिनः मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं नारायणं कर्शयन्तः, मदनुशासनाकरणमेव मत्कर्शनम् । तान् विद्ध्यासुरनिश्चयानासुरो निश्चयो येषां ते आसुरनिश्चयास्तान् परिहरणार्थं विद्धीति उपदेशः ॥१७.६॥

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते रस्यस्निग्धादिषु आहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां चोपादानार्थम् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान् बुद्ध्वा कथं नु नाम परित्यजेत्, सात्त्विकानेवानुतिष्ठेदित्येवमर्थमाह

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥१७.७॥

आहारस्त्वपि सर्वस्य भोक्तुः प्राणिनस्त्रिविधो भवति प्रियः इष्टः । तथा यज्ञस्तथा तपस्तथा दानम् । तेषामाहारादीनां भेदमिमं वक्ष्यमाणं सृणु ॥१७.७॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥१७.८॥

आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च आयुःसत्त्वबलारोग्यसुखप्रीतयस्तासां विवर्धनाः आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । ते च रस्या रसोपेताः, स्निग्धाः स्नेहवन्तः, स्थिराश्चिरकालस्थायिनो देहे, हृद्याः हृदयप्रियाः, आहाराः सात्त्विकप्रियाः सात्त्विकस्येष्टाः ॥ १७.८॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥१७.९॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन इत्यत्रातिशब्दः कट्वादिषु सर्वत्र योज्यः । अतिकटुः अतितीक्ष्णः इत्येवम् । कटुश्चाम्लश्च लवणश्चात्युष्णश्च तीक्ष्णश्च रूक्षश्च विदाही च ते आहारा राजसस्येष्टा दुःखशोकामयप्रदाः दुःखं च शोकं चामयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥१७.९॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१७.१०॥

यातयामं मन्दपक्वम्, निर्वीर्यस्य गतरसशब्देनोक्तत्वात् । गतरसं रसवियुक्तम्, पूति दुर्गन्धि, पर्युषितं च पक्वं सद्रात्र्यन्तरितं च यत्, उच्छिष्टमपि भुक्तशिष्टमुच्छिष्टम्, अमेध्यमयज्ञार्हं भोजनमीदृशं तामसप्रियम् ॥१७.१०॥

अथेदानीं यज्ञस्त्रिविध उच्यते

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥१७.११॥

अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टौ यो यज्ञ इज्यते निर्वर्त्यते, यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय, नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य, स सात्त्विको यज्ञ उच्यते ॥१७.११॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१७.१२॥

अभिसन्धाय तु उद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१७.१२॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१७.१३॥

विधिहीनं यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तम्, अन्नं यस्मिन् यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम् । मन्त्रहीनं मन्त्रतः स्वरतो वर्णतो वा वियुक्तं मन्त्रहीनम्, अदक्षिणमुक्तदक्षिणारहितम्, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १७.१३॥

अथ इदानीं तपस्त्रिविधमुच्यते

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।

ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१७.१४॥

देवा च द्विजा च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनम् । शौचम् । आर्जवमृजुत्वम् । ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । पञ्चैते तस्य हेतवः [गीता १८.१५] इति हि वक्ष्यति ॥ १७.१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१७.१५॥

अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत्प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशेष्यते । विशेषणधर्मसमुचयार्थश्चशब्दः । परप्रत्ययार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि, न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्य इतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । किं पुनस्तत्तपः ? यत्सत्यं वाक्यमनुद्वेगकरं प्रियं हितं च, तत्तपो वाङ्मयम् । यथा शान्तो भव वत्स, स्वाध्यायं योगं चानुतिष्ठ, तथा ते श्रेयो भविष्यतीति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥१७.१५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१७.१६॥

मनःप्रसादः मनसः प्रशान्तिः स्वच्छतापादनं प्रसादः । सौम्यत्वं यत्सौमनस्यमाहुः । मुखादिप्रसादादिकार्योन्नेयान्तःकरणस्य वृत्तिः । मौनं वाङ्नियमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमिति । आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहः । वाग्विषयस्यैव मनसः संयमः मौनमिति विशेषः । भावसंशुद्धिः परैः व्यवहारकालेऽमायावित्वं भावसंशुद्धिः । इत्येतत्तपो मानसमुच्यते ॥१७.१६॥

यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिगुणभेदेन कथं त्रिविधं भवतीति, उच्यते

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७.१७॥

श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृशं तपः, तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥१७.१७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१७.१८॥

सत्कारः साधुकारः साधु अयं तपस्वी ब्राह्मण इत्येवमर्थम् । मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थम् । पूजा पादप्रक्षालनार्चनाशयितृत्वादिस्तदर्थं च तपः सत्कारमानपूजार्थम् । दम्भेन चैव यत्क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेन अध्रुवम् ॥१७.१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१७.१९॥

मूढग्राहेण अविवेकनिश्चयेन आत्मनः पीडया यत्क्रियते तपः परस्य उत्सादनार्थं विनाशार्थं वा, तत्तामसं तप उदाहृतम् ॥१७.१९॥

इदानीं दानत्रैविध्यमुच्यते

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥१७.२०॥

दातव्यमिति एवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय, समर्थायापि निरपेक्षं दीयते । देशे पुण्ये कुरुक्षेत्रादौ । काले संक्रान्त्यादौ । पात्रे च षडङ्गविद्वेदपारग इत्यादौ । तद्दानं सात्त्विकं स्मृतम् ॥१७.२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥१७.२१॥

यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थम्, फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति । तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तम्, तद्दानं राजसं स्मृतम् ॥१७.२१॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥१७.२२॥

अदेशकालेऽदेशेऽपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णे । अकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यः । देशादिसंपत्तौ वा असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं च यद्दानम्, तत्तामसमुदाहृतम् ॥१७.२२॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥१७.२३॥

ओं तत्सदिति एवं निर्देशः, निर्दिश्यतेऽनेनेति निर्देशः । त्रिविधो नाम निर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिताः निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥१७.२३॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१७.२४॥

तस्मातोमित्युदाहृत्य उच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥१७.२४॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥१७.२५॥

तदित्यनभिसंधाय । तदिति ब्रह्माभिधानमुच्चार्यानभिसंधायश्च यज्ञादिकर्मणः फलं यज्ञतपःक्रिया यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥१७.२५॥

ओंतच्छब्दयोर्विनियोग उक्तः । अथेदानीं सच्छब्दस्य विनियोगः कथ्यते

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥१७.२६॥

सद्भावे । असतः सद्भावे यथाविद्यमानस्य पुत्रस्य जन्मनि । तथा साधुभावे चासद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च । सदित्येतदभिधानं ब्रह्मणः प्रयुज्यतेऽभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥१७.२६॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥१७.२७॥

यज्ञे यज्ञकर्मणि या स्थितिः, तपसि च या स्थितिः, दाने च या स्थितिः, सा सदिति चोच्यते विद्वद्भिः । कर्म चैव तदर्थीयं यज्ञदानतपोऽर्थीयम् । अथवा, यस्याभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोऽर्थीयमीश्वरार्थीयमित्येतत् । सदित्येवाभिधीयते । तदेतद्यज्ञदानतपआदिकर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥१७.२७॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्, तस्मात्

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥१७.२८॥

अश्रद्धया हुतं हवनं कृतम् । अश्रद्धया दत्तं ब्राह्मणेभ्यः । अश्रद्धया तपस्तप्तमनुष्ठितम् । तथाश्रद्धयैव कृतं यत्स्तुतिनमस्कारादि, तत्सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात्पार्थ । न च तद्बहुलायासमपि प्रेत्य फलाय नो अपीहार्थम्, साधुभिर्निन्दितत्वादिति ॥१७.२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
सप्तदशोऽध्यायः ।